मध्वसिद्धान्तप्रतिष्ठानग्रन्थमाला -३

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# माण्डूकोपनिषद्भाष्यम्

( व्याख्यासप्तकोपेतम् )



ओतमत्र जगद्यस्मादों तस्माद् **भगवान्** हरिः ।

संपादकः

विद्वान्, उपाध्याय कृष्णाचार्यः एम् ए,


प्रकाशकः

श्रीउत्तरादिमठः

मध्वसिद्धान्तप्रतिष्ठानम्,

श्रीजयतीर्थविद्यापीठम्, बेंगलूरु - ४.

मध्वसिद्धान्तप्रतिष्ठानग्रन्थमाला -३

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# माण्डूकोपनिषद्भाष्यम्

( व्याख्यासप्तकोपेतम् )

गूढकर्तृकटिप्पणीसहितया, श्रीव्यासतीर्थविरचितया टीकया, श्रीवादिराजतीर्थ-
विरचितया प्रकाशिकया, श्रीसत्यप्रियतीर्थविरचितया विवृत्या, ताम्रपर्णी-
श्रीनिवासाचार्यविरचितया भाष्यार्थरत्नावल्या, श्रीश्रीनिवासतीर्थ-
विरचितया पदार्थदीपिकया, श्रीराघवेन्द्रतीर्थविरचितेन
उपनिषत्खण्डार्थेन च विभूषितम् ।

प्रकाशकः

श्रीउत्तरादिमठः
मध्वसिद्धान्तप्रतिष्ठानम्

श्रीजयतीर्थविद्यापीठम् बेंगलूर - ४

MĀṆḌŪKŌPANIṢADBHĀṢYAM of **Shri Madhwacharya** with Seven commentaries of Ṭīkā of Shri Vyasateertha with Gūḍhakartṛka Ṭīkāṭippaṇi. Prakāśikā of Shri Vadirajatheertha, Bhāṣyavivṛti of Shri Satypriyateertha, Bhāṣyaratnāvali of Shri Tamraparni Shrinivasacharya, Padārthadīpikā of Shri Shrinivasateertha and Khaṇḍārtha of Shri Raghavendrateerth.

Editor : Pdt.Krishnacharya Upadhyaya M.A

*Published by :*
**Shri Madhwasiddhanta Pratishthanam,**
(Founded by Shri 1008 Shri Satyatmateertha Swamiji)
**Uttaradi Math,**
Shri Jayatirtha Vidyapeeth,
Basavanagudi, Bangalore - 560 004.

First Edition : 1998

Copies : 1000

**Price : Rs.75-00**

*Type setting :*
**Mahidas Joshi & Ananda Chintamani,**
Students of Shri Jayateerth Vidyapeeth,
Bangalore-4.

*Printed By :*
M. H. Koujalagi,
Brindavan Printers & Publishers Pvt. Ltd.
Bangalore.

।। श्रीः ।।

।। श्रीदिग्विजयरामो विजयते ।।

पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ।।

मण्डूकरूपिणा वरुणेन कृता नारायणस्तुतिरेवेयं माण्डूकोपनिषत् । विश्वतैजसप्राज्ञातुरीयाः हि अत्र स्तूयन्ते । प्रणवः स्तवसाधनम् । "प्रणवः सर्ववेदेषु" इति भगवद्गीतासु भगवतो विभूतेः स्थानतया आम्नात एव प्रणवः । सर्वासां वाचां मूलं वेदः। तस्य पौरूषसूक्तम् । तस्य गायत्री। तस्या व्याहृतिः । तस्या एष प्रणवः । त्रिमात्रोऽसौ । अष्टमात्रश्च विश्वतैजसप्राज्ञातुरीयाणां आत्मान्तरात्मपरमात्मज्ञानात्मनांच वाचकः । कृष्णरामनृसिंहवराहकूर्मपरंज्योतिपरंब्रह्मवासुदेवरूपाष्टमूर्तिवाचकश्च । एतावानस्य प्रणवस्य महिमा ? अतोज्यायांश्च प्रणवः । समेषां जीवानां यथायथं जाग्रत्स्वाप्नसुषुप्त्याख्यावस्थात्रयस्य नियन्तॄणां विश्वतैजसप्राज्ञानां मोक्षनियामकस्य तुरीयस्यच महिमा एनं प्रणवं द्वारीकृत्य वर्णितोऽस्यामुपनिषदि । श्रीमदाचार्यपादानां भाष्यमन्तरा न वयं प्रभवाम इमामुपनिषदं वेत्तुम्। नच भाष्यं टीकादिभिर्विना स्ववगाहम्। अतः श्रीमध्वसिद्धान्त प्रतिष्ठान द्वारा इयं "माण्डूकोपनिषत्" सटिप्पणटीकासहितभाष्यसमेता प्रकाशिता । अस्य ग्रन्थस्य अध्ययनेन सर्वे जिज्ञासवः कृतार्था भवेयुः ।

विशेषतः परिश्रमेण अस्य सम्पादनकर्तारं अस्मच्छिष्यं श्रीउपाध्याय कृष्णाचार्य भगवान् श्रीमूलदिग्विजयरामाभिन्नवेदव्यासः एवमेवानेन नैकान् ग्रन्थान् सम्पाद्य अनुगृण्हातु इति प्रार्थयामहे ।

तथा मुद्रणकार्ये गणकयन्त्रेण अक्षरविन्यासं कृत्वा सेवां कृतवन्तौ श्रीजयतीर्थविद्यापीठविद्यार्थिनौ महिदासः जोशि (सत्ति) तथा आनन्दः चिन्तामणि इत्येतौ तथा, यथोचितकाले सुष्टु मुद्रितवतो मध्वराव् कौजलगी इत्येतानपि विशेषतो ज्ञानादिदानेन अनुगृण्हातु इति प्रार्थयामहे ।

५-७-१९९८
श्रीबहुधान्यसंवत्सरस्य
आषाढशुद्धैकाशी

इति सप्रेमनारायणस्मरणानि
श्री १००८ श्रीसत्यात्मतीर्थश्रीपादाः
श्रीउत्तरादिमठः

# प्राक्कथनम्

।। अजितो जयति श्रीशः ।।

**एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।**
**यस्तं वंदे चिदात्मानं विष्णुं विश्वादिरूपिणम् ।।**

जीवानां प्रधानभूताः अवस्थास्तावत् चतस्रः । ताश्च जाग्रत्स्वप्नसुषुप्तिमोक्षाख्याः । एतासां नियन्तारश्च विश्वतैजसप्राज्ञतुरीयाः । समेषां रूपाणां ज्ञानाय तथा प्रणवप्रतिपाद्यत्वं च तेषामिति वर्णनाय स्तुतये च प्रवृत्तेयमुपनिषत् । वरुणः मण्डूकरूपी सन् भगवन्तं तुष्टाव । अत एव माण्डूकेति नाम अस्या उपनिषदः ।

विशेषतो ओंकारः अस्यां प्रतिपादितः । न केवलमस्यामेव प्रस्थानत्रये इतिहासपुराणादिषु च। प्रणवस्य महती इयत्येव इति वक्तुं न शक्या । यतः ओंकारेण सर्वा वाक् "संतृण्णा" । हरिवंशे च "एतद्धिपरमं ब्रह्म ब्राह्मणानां मनीषिणाम्"इति मंत्रत्वमबोधि एतस्य प्रणवस्य । अयं प्रणवः तार इत्यपि गीयते। यस्मात् तारयति सर्वान् इति तारः । संसारसागरे मग्नान् उद्धृत्य पारं प्रापयति । अयं प्रणवः हरेर्नाम च । भगवतः स्तुतिसाधनं च अयमोंकारः । ओंकारमधिकृत्यैव ज्ञानिभिः अनेके प्रबन्धाः निबद्धाः । तादृशो महिमा अस्य ।

अस्याः उपनिषदः यथार्थज्ञानाय श्रीमदानंदतीर्थभगवत्पादैः भाष्यं व्यरचि । न केवलं भाष्येण ज्ञानं मंदाधिकारिणां अस्माकं सुकरं। "अनन्तमात्रांतमुदाहरंति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः ।....... चतुर्मुखाकृतिर्जपाधिकारी यतिरस्य सूचितः"। श्रीसुमध्वविजये च पंडिताचार्यैः वायुरेव मुख्याधिकारी उदघोषि। अतः भाष्यज्ञानं व्याख्यानसापेक्षम् । एत[illegible]कृत्य संप्रति सप्तव्याख्यानानि उपलब्धानि ।

१) व्यासतीर्थविरचिताटीका ।
२) गूढकर्तृका टीकाटिप्पणी ।
३) श्रीवादिराजतीर्थविरचिता प्रकाशिका ।
४) श्रीसत्यप्रियतीर्थविरचिता भाष्यविवृतिः ।

५) ताम्रपर्णी श्रीनिवासाचार्यविरचिता भाष्यार्थरत्नावलिः ।

६) श्रीराघवेंद्रतीर्थविरचितः खंडार्थः ।

७) श्रीश्रीनिवासतीर्थविरचिता पदार्थदीपिका ।

एतासु काश्चन बहोःकालात् पूर्वं प्रकटिताः। परमिदानीं नोपलभ्यन्ते । काश्चन अप्रकटिता एव । अप्रकटिताश्च श्रीसत्यप्रियतीर्थानां भाष्यार्थविवृतिः, ताम्रपर्णी आचार्याणां भाष्यार्थरत्नावलिः, अन्या च गूढकर्तृका टीकाटिप्पणीति । एवं व्याख्यासप्तकेन अध्ययनसौकर्याय एकत्रैव सर्वा व्याख्या लभ्येरन् इति मनीषया इदमुपनिषद्भाष्यमीदनीं प्रकटितम् ।

## श्रीव्यासतीर्थाः

अस्माभिः मुद्राप्य प्राकाश्य नीयमाने अस्मिन् ग्रन्थे टिप्पणीषु मध्ये व्यासतीर्थविरचिता टीका प्रथमं स्थानं लभते । न केवलमस्मिन् ग्रन्थे किंतु उपनिषद्व्याख्यानसरण्यां श्रीमट्टीकाकृत्पादानंतरं प्रथमं स्थानं एतेषामेव । व्यासतीर्थेषु अनुग्रहायैव टीकाकृद्भिः इतरोपनिषदां व्याख्या न व्यरचि । छलारी संकर्षणाचार्यैः उक्तं च - "इतरोपनिषद्भाष्यटीकाकृति सयाचने । शिष्यार्ये व्यासतीर्थाख्ये टीका नाकृत स स्वयम्।। "एते ईशावास्यषट्प्रश्नद्वयं विहाय अष्टावपि उपनिषदो व्याचक्रिरे । प्रायशः व्यासतीर्थपर्यन्तं खंडार्थसरणिर्नासीत् । एते एव माध्वसंप्रदाये इदंप्रथमतया खंडार्थरचयितारः । आचार्याभिप्रायानुसारी खंडार्थः आवश्यकश्चासीत् । प्रथमं खंडार्थः ततः भाष्यार्थश्च व्यलेखि । एतेषां व्याख्यानशैली सरला सुबोधा च। महाभारततात्पर्यनिर्णयस्यापि व्याख्यानमेतैर्निरमायीति प्रतीतिः। अणुजयतीर्थविजयश्च एतैः निर्मितः ।

## श्रीवादिराजतीर्थाः

एते प्रथितयशसः महाज्ञानिनश्च । एतेऽपि नैकान्ग्रन्थान् व्याचख्युः ।

युक्तिमल्लिकायाःस्थानं असदृशं। इयं स्वतन्त्रा कृतिः युक्त्युपबृंहिता च। तेषां ग्रन्थस्यापूर्वं महिमातिशयं श्रीसुरोत्तमतीर्थास्तट्टीकाकारा एवं वर्णयन्ति-

यत्राश्रुतचर्चा चर्चाऽस्ति युक्तयश्चः श्रुताः पुरा ।
तन्मूला सा च टीकेयं किं मानुषकृतिर्भवेत् । इति ।

उपनिषद्भाष्यव्याख्याः सुधातत्त्वप्रकाशिकादिनैकाष्टिप्पण्यश्च उदभूयन्त । श्रीकृष्णमधिकृत्य सरससुन्दरं रूक्मिणीशविजयनामकं काव्यं च व्यरचि । एते सर्वविधतया साहित्यप्रपञ्चं स्तोत्रप्रपञ्चं शास्त्रप्रपञ्चं च अभिवर्धयामासुः । एतेषां व्याख्या प्रकाशिकाऽपि अत्र संयोजिता ।

## श्रीमद्राघवेन्द्रतीर्थाः

"परिमळाचार्याः" इति सर्वजनीनप्रसिद्धिभाजः श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणाः भारते सर्वत्र सर्वजनसमादरणीयाः । एषां परिमळग्रन्थः सरलः सुबोधः सर्वेषां विदुषां समेषां विद्यार्थिनामत्युपयुक्तश्च । एषां टिप्पण्यादिग्रन्थाः प्रस्थानत्रयेऽपि वर्तन्ते । स्वामिपादाः महातपस्विनः आसन्निति आविपालगोपालं जानन्त्येव । परःसहस्रं जनाः तेषां सेवया संकटशतेभ्यः समुद्घृताः विद्यन्ते। इतोप्यधिकं तेषां वैशिष्ट्यं तैर्विरचितेषु ग्रन्थेषु दृश्यते । एषां खंडार्थश्चात्र निवेशितः ।

## श्रीसत्यप्रियतीर्थाः

श्रीमदुत्तरादिमठाधीशाः एते श्रीसत्यविजयतीर्थानां शिष्याः निशायां दिवाकरदर्शयितॄणां जगद्विख्यातानां श्रीसत्यबोधस्वामिनां आश्रमगुरवश्च। एतैर्विरचिताः ग्रन्थाः श्रीमत्सत्यप्रमोदतीर्थसंग्रहिते ग्रन्थागारे सन्ति । ते च आथर्वणोपनिषद्भाष्यव्याख्या, माण्डूकोपनिषद्भाष्यविवृतिः तत्त्वप्रकाशिकाव्याख्या, चन्द्रिकाबिन्दु श्चेति । अत्र एतेषां माण्डूकोपनिषद्भाष्यविवृतिश्च निवेशिता । अस्यामुपनिषदि बहुत्र स्थलेषु "तदुक्तं महाभाष्ये" इति निदर्शयन्ति । शब्दसौष्ठवं च अभिधीयते । किञ्च प्रसिद्धा श्रीजयराजस्तुतिरपि एतैर्विरचिता । स्वाश्रमगुरुषु सत्यविजयस्वामिपादेषु केचन श्लोकाः निबद्धाः -

**"नान्या मे गतिरस्ति सत्यविजयस्वामिन् त्वदंघ्रिं विना" इत्यादयः** ।

एतानधिकृत्य घनश्यामकविना "प्रचण्डराहूदयं" नाम नाटकं व्यरचि । इदं मुद्रापितंच श्रीसत्यध्यानविद्यापीठेन ।

## श्रीश्रीनिवासतीर्थाः

वंशपल्ली-श्रीनिवासतीर्थाः इमे यादवार्येत्यपरपर्यायाणां यदुपत्याचार्याणां भ्रातृव्याः शिष्याग्रेसराः विरक्तशिखामणयः प्रभूतग्रन्थनिर्मातारश्च बभूवुः । तन्निर्मिताः द्विपञ्चाशत्संख्याकाः ग्रन्थाः इदानीमपि उपलभन्ते । गहनार्थ-स्पष्टीकरणे तेषां कौशलं आजानसिद्धं विस्मयावहञ्च । सर्वप्रस्थानेषु तेषां ग्रन्थाः समुल्लसन्ति । एते श्रीमद्राघवेन्द्रतीर्थश्रीपादानामनुग्रहेण श्रीनिवास-तीर्थाः संजाताः । एतेषां व्याख्या पदार्थदीपिकानाम्नी पूर्वं मुद्रिताऽपि वाचकानामानुकूल्यार्थं पुनः प्रकटिता वर्तते ।

## ताम्रपर्णी श्रीनिवासाचार्याः

इमे आचार्याः न्यायसुधाव्याख्यातृणां ताम्रपर्णी विठ्ठलाचार्याणां तनूजाः। सत्तत्वरत्नमालाकाराणां ताम्रपर्णी आनन्दतीर्थाचार्याणां सहोदराः । प्रायः एते सत्यपूर्णतीर्थश्रीपादानां समकालीनाः तदनन्तरभाविनो वा इति भाति। यतः ऐतरेयभाष्यार्थरत्नमालायां सत्यपूर्णस्वामिनः स्तुवन्ति - "श्रीसत्यनूत्नाभिधपूर्णवारिधेर्जातः सुविद्योरुकलाभिपूर्णः । तापं हरन्नोऽमृ-तवीक्षणेन श्रीसत्यपूर्णेन्दुरहो विराजते"इति। एते पञ्चविंशाधिकान् ग्रन्थान् व्याचक्रिरे। व्याख्यानशैली च सरसा सुभगा सप्रमाणाच वर्तते। तत्र तत्र प्रमेयानि च उच्यन्ते । एतेषां कृतयश्च अधोनिर्दिष्टा वर्तन्ते । १) ऐतरेय-भाष्यटीका, २)बृहद्भाष्यटीका,३) षट्प्रश्नभाष्यटीका,४) माण्डूकोपनिषद्-ष्यटीका, ५) गीताभाष्यप्रमेयदीपिकाटीकाटिप्पणी. ६) गीतातात्पर्यन्याय-दीपिकाटीकाटिप्पणी,७)महाभारततात्पर्यनिर्णयटिप्पणी ८)भागवतटिप्पणी. ९) यमकभारतटिप्पणी,१०) तत्वप्रकाशिका- टिप्पणी (वाक्यार्थमुक्तावली) ११) तत्वप्रकाशिकाटिप्पणी(प्रमेयमुक्तावली) १२) तन्त्रसारटीका, १३) धर्म-शास्त्रनिबन्धात्मकः स्मृतिसंग्रहः,१४)एकादशीनिर्णयः,१५) गोत्रप्रवरनिर्णयः, १६)तत्वसंख्यानटीकाटिप्पणी,१७) तत्वविवेकटीकाटिप्पणी,१८) तत्वसंग्रहः, १९) सृष्टिमुक्तावली, २०) प्रमाणसंग्रहः, २१) तारतम्यस्तोत्रटीका, २२) विरोधोद्धारः,२३) वायुलीलामृतं, २४) कृष्णामृतमहार्णवटीका ।

एतासु तावत् गीतातात्पर्यन्यायदीपिकाव्याख्या, ऐतरेयोपनिषद्भाष्यव्याख्या,तत्त्वप्रकाशिकाटिप्पणी वाक्यार्थमुक्तावलीच कृष्णामृतमहार्णवटीकाः मुद्रिताः । माण्डूकोपनिद्भाष्यटीका परमिदानीं अत्र संयोज्य प्रकटिता ।

एवं भाष्यटीकाटिप्पण्यादिकृतीः संयोज्यायं ग्रन्थः प्रकाशितः ।

अत्र व्यासतीर्थीया टीका न यथाक्रमं संयोजिता । यतः प्रथमं एते खंडार्थान् तदनु भाष्यार्थान् व्यरचयन् । अस्माभिस्तु अत्र वाचकसौकर्याय प्रतिमन्त्रं खंडार्थो भाष्यार्थश्च विभज्य संयोजितो वर्तते ।

अत्र संयोजिता टीकाटिप्पणी च द्वितीयखंडे "प्रपञ्चो यदि विद्येत" इत्येतावन्मात्रपर्यन्ता वर्तते । यतः सा एतावत्येव संप्रत्युपलभ्यते । ग्रन्थस्यास्य प्रकाशने मूलप्रेरकाणां एतत्संस्थायाश्च कारणीभूतानां परमपूज्यगुरुवर्याणां श्रीमदुत्तरादिमठाधीशानां श्री १००८ श्रीमत्सत्यप्रमोदतीर्थानां तथा अधुना पीठे विराजमानानां श्री १००८ श्रीमत्सत्यात्मतीर्थश्रीपादानां चरणनलिनयोः तैः प्रदत्तं मार्गदर्शनं सर्वविधप्रोत्साहनं च स्मारं स्मारं भक्तिपूर्वकाः साष्टांगप्रणतिततयः समर्प्यन्ते ।

तथैव श्रीसत्यप्रियतीर्थविरचितव्याख्यानस्य प्रतिलिपिदातृभ्यः विद्योपदेशकेभ्यः पूज्येभ्यः श्रीगुत्तलाचार्येभ्यश्च भूयांसि नमांसि समर्पयामि । ताम्रपर्णीयं व्याख्यानं यथाकालं प्रदाय उपकृतवद्भ्यः श्रीसत्यप्रमोदतीर्थ संग्रहीतग्रन्थागारनिर्वाहकेभ्यः विद्वद्भ्यः श्रीउमर्जी श्रीकराचार्येभ्यश्च प्रणतीः आवेदयामि। गूढकर्तृकटिप्पणीं च ग्रंथागाराय दत्तवते हुलगी श्रीनिवासाचार्यतनूजाय आनंदतीर्थाचार्याय च हार्दं कृतज्ञता संसूच्यंते ।

एवं भाष्यटीकादिग्रंथानां संशोधने तथा मुद्रणदोषसंशोधने च अत्यंतं साहाय्यमाचरितवते विदुषे श्रीजोशीरंगनाथाचार्याय च नमांसि आवेदयामि। पुनरेकवारं परमपूज्यानां गुरुवर्याणां श्रीसत्यात्मतीर्थश्रीचरणानां चरणनलिनयोः साष्टांगं प्रणतिततीः समर्प्य विरमामि ।

८-८-९८,
श्रीबहुधान्यनाम संवत्सरस्य
श्रावणपौर्णिमा,

**उपाध्यायकृष्णाचार्यः**,
अध्यापकः, जयतीर्थविद्यापीठम्.

# अनुग्रहाशंसनम्

अस्मदभिमानिभिः दिलीप लक्ष्मेश्वर, मनोज लक्ष्मेश्वर, गिरीश लक्ष्मेश्वर इत्येतैः स्वपितुः विठ्ठलराव् लक्ष्मेश्वर-महोदयस्य सप्ततितमे शुभवर्धन्तिमहोत्सवे, सव्याख्या-सप्तकस्य माण्डूकोपनिषद्भाष्यस्य मुद्रणव्ययसमर्पणद्वारा शास्त्रप्रतिपाद्यस्य भगवतो वेदव्यासस्य सेवा व्यधायि । वेदव्यासाभिन्नः श्रीसीतापतिश्रीमूलरामचन्द्रो दीर्घायुरारो-ग्यैश्वर्यज्ञानभक्तिवैराग्यप्रदानेन, सेवाकर्तॄन् तन्मातापितरौ श्रीविठ्ठलराव् महोदयं कुं।। सौ।। वत्सला विठ्ठलराव् इत्येतान् सर्वान् समनुगृण्हातु इति तमेव अस्मदुपास्यं भगवंतं संप्रार्थयामहे ।

श्रीमदुत्तरादिमठाधीशाः

श्री १००८ श्रीमत्सत्यात्मतीर्थश्रीचरणाः

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

।। श्रीमदानन्दतीर्थभगवत्पादाचार्यगुरुभ्यो नमः ।।

।। समस्ततात्त्विकदेवताभ्यो नमः ।।

।। श्रीगुरुभ्यो नमः ।।

# ।। माण्डूकोपनिषद् भाष्यम् ।।

## व्याख्यानसप्तकोपेतम्

## उपनिषत्

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्य-दिति सर्वमोङ्कार एव यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।।

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं भाष्यम्

पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम्

मण्डूकरूपिणा वरुणेन चतूरूपो नारायणोऽत्र स्तूयते ।

"ध्यायन्नारायणं देवं प्रणवेन समाहितः ।
मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम् ।। " इति पाद्मे ।

"ओमित्युक्तं तु यद् ब्रह्म तदक्षरमुदाहृतम् ।
ओतमत्र जगद्यस्मादों तस्माद् भगवान् हरिः ।

तदिदं गुणपूर्त्यैव सर्वमित्येव शब्दितम् ।
भाविभूतभवत्कालेष्वेकरूपतया हरिः ।
सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्तिता " ।।

इति बृहत्संहितायाम् ।

"ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः ।
सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेःक्वचित् ।।" इति नैर्गुण्ये ।

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम् । त्रिकालातीतत्वं च तस्यैव। प्रकृतेरपि त्रिकालातीतत्वं विद्यत इति अन्यदिति विशेषणम् ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**अनादिबंधविध्वंसं लब्ध्वा यज्ज्ञानतः पुमान् ।**
**मोदते निजरूपेण तं वंदे विष्णुमादरात् ।। १ ।।**

**नेत्राग्रादिस्थितोऽवस्था जाग्रदाद्याः प्रवर्तयन् ।**
**विश्वादिरूपी भगवान्यस्तं वंदे श्रीयः पतिं ।। २ ।।**

**खंडार्थः**- इहामुत्रफलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तीष्टावाप्तिसाधनभगवत्प्रतिपादिकां मांडूकोपनिषदं यथावद्व्याचिख्यासुः भगवान् आनंदतीर्थमुनिः समीहितसमाप्त्यादिसाधनतयावसितं मंगलाचरणमादौ कार्यमिति सूचयन् तदुक्तगुणवंतमुपश्लोकयन् प्रणमति ।। **पूर्णेति** ।। आनंदमयइति पूर्णानंदत्वमुक्तं। एषसर्वज्ञ इति ज्ञानस्वरूपत्वमुक्तं। एषयोनिः सर्वस्येति उक्तसर्वसृष्ट्युपयुक्तत्वेन पूर्णशक्तित्वं च सिद्धम्। त्रिकालातीतमिति नित्यत्वं । प्रणवोऽव्ययमित्यव्ययत्वं। स्थूलभुक् प्रतिविविक्तभुगानंदभुगिति सर्वभोक्तृत्वं । तुरीयं पदमश्नुत इति पदत्वं ।

योहवा अविदितार्षच्छंदोदैवतेत्यादिना ऋष्यादीनज्ञात्वा विद्याभ्यासिनः अनर्थोक्तेः कियतो वाक्यत्वेन च्छंदोभावात् शिष्टस्यानुष्टुप्त्वावगमसंभवात् ऋषिदेवते आह ।। **मंडूकेति** ।। जाग्रदाद्यवस्थाभेदलक्षणो विश्वादिरूपो जीवोत्रोच्यत इत्येतन्निरासाय चतूरूपो नारायणइति । नन्वस्या मंडूकोनाम कश्चिदृषिरिति प्रतीयते तत्कथं वरुण ऋषिरित्यत उक्तं।।**मंडूकरूपिणेति**।। अस्या मंडूकरूपी वरुणऋषिर्हरिर्देवतेत्येतत्कुत इत्यत आह।।**ध्यायन्निति**।। प्रणवेन प्रणवाद्ययोपनिषदा । विषयविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तये परमानंदावाप्तयेच समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपास्तिमाह ।। **ओमित्यादिकया समग्रोपनिषदा** ।। ओमिति यत्प्रणवप्रतिपाद्यं एतदक्षरं इदं सर्वं पूर्णं प्रणवस्याभिधेयमुक्तं प्रवृत्तिनिमित्तं किमिति जिज्ञासायां त्रिकालातीतत्वमित्याह ।। **तस्येत्यादिना** ।। उपव्याख्यानं उपपन्नं व्याख्यानं । अक्षरं भूतं भवद् भविष्यच्चेतियोजना ।

इदं सर्वमित्युक्तं पूर्णत्वमक्षरादन्यस्य नेत्याह ।। **सर्वमोंकार एवेति** ।। ओंकार एव सर्वमिति योजना । भूतं भवद् भविष्यच्चेत्युक्तं प्रवृत्तिनिमित्तं

त्रिकालातीतत्वं चाक्षरादन्यस्य नेत्याह ।। **यच्चेत्यादिना** ।।

**भाष्यार्थः** - ओमित्येतदक्षरं प्रणवाख्यमिदं सर्वं जगदित्यन्यथा प्रतीतिं निवारयन् व्याकरोति ।। **ओमिति** ।। तस्योपव्याख्यानमिति प्रस्ताव्य भूतं भवद्भविष्यदित्युक्तं त्रिकालातीतत्वमुपलक्षणत्वेन प्रणवो बह्वर्थ इति भावेन भाष्यकारः स्वयमर्थान्तरमाह ।। **ओतमिति** ।। प्रतीतार्थो नचेत्तर्हीदं सर्वमित्ययुक्तमित्यतस्तद्व्याचष्टे ।। **तदिदमिति** ।। भूतं भवद्भविष्यदिति वाक्यं ब्रह्मणो नित्यत्वमात्रप्रतिपादकत्वप्रतीतिं निवारयन्व्याचष्टे ।। **भावीति** ।। भाविभूतभवत्कालेष्वित्यस्य प्रतिपदं सर्वदेति । तथाच सर्वदैवैकरूपतया नित्य इत्यादि योजना ।

इदं सर्वमित्यनेनैकार्थत्वप्रतीतिं निवारयन् सर्वमोंकार एवेत्येतत्प्रमाण-मुदाहृत्य स्ववचनेन व्याचष्टे ।। **ओमिति** ।। यच्चान्यत् त्रिकालातीतं तदप्योंकार एवेत्येतद्भूतं भवद् भविष्यदित्यनेनैवं सर्वदैकप्रकारत्वस्योक्त-त्वाद् व्यर्थमिति प्रतीतिं निवारयन् व्याचष्टे ।। **त्रिकालेति** ।। यच्च त्रिकालातीतमित्यनुक्त्वा अन्यदिति विशेषणं कस्य व्युदासायेत्यत आह ।। **प्रकृतेरिति** ।। प्रकृतेश्चेतनप्रकृतेः ।

## गूढकर्तृका टीकाटिप्पणी

**चतूरूपं श्रीपतिंच गुरून्नत्वा यथामति ।**
**गुरूपदिष्टमार्गेण माण्डूकार्थः प्रकाश्यते ।।**

व्यासतीर्थश्रीचरणाः कृतं स्वेष्टदेवतावन्दनं शिष्यशिक्षार्थं निबध्नन्ति ।। **अनादिति** ।। यज्ज्ञनतः यत्साक्षात्कारात् । मोक्षोहि द्विविधः अनिष्ट-निवृत्तिरूप इष्टप्राप्तिरूपश्चेति । तत्र प्रथमः प्रथमार्धेन प्रतिपादितः । द्वितीयस्तु द्वितीयेनेति द्रष्टव्यम् ।

इदानीं तमेव भगवन्तमधिकृतत्वोपाधिना प्रणमति ।। **नेत्रेति** ।। दक्षिणाक्षिस्थितो विश्वो जाग्रदवस्थां प्रवर्तयति । कण्ठदेशस्थस्तैजसः स्वप्नम् । हृदयस्थः प्राज्ञःसुषुप्तिम् । नासिकामूलमारभ्य द्वादशाङ्गुलान्ते मस्तकमध्येस्थितस्तुरीयो मुक्त्यवस्थामिति विवेकोऽवगन्तव्यः । अन्याः समाध्याद्या अवस्था अपि विश्वादिरूपी भगवानेव प्रवर्तयतीति बोध्यम्

।। **अमुत्र स्वर्गे शमदमादिमतः** ।। आदिपदेन भक्त्यादिकं ग्राह्यम् ।। **साधनेति** ।। ज्ञानादिसाधनप्रतिपादिकामित्यर्थः ।

ननु अन्यैरेव व्याख्याततत्वात् पुनरारम्भो व्यर्थ इत्यत आह ।। **यथावदिति** ।। **समीहितेति** ।। आभीष्टग्रन्थसमाप्तीत्यर्थः । सूचयन् । निबन्धनेनज्ञापयन् ।। **तदुक्तेति** ।। एतदुपनिषदुक्तेत्यर्थः । उपश्लोकयन् कीर्तयन् ।। **पूर्णेतीति** ।। भाष्यश्लोकस्यायमर्थः । नित्यं स्वरूपेण अव्ययं-गुणादिना । चतुर्धा विश्वादिचतूरूपेण । सर्वभोक्तारं विश्वः स्थूलभुक् । तैजसः प्रविविक्तभुक् । प्राज्ञः आनन्दभुगिति सर्वशुभभोक्तारमित्यर्थः । तुरीयरूपस्योपनिषदि पृथग्भोगानुक्तेः छत्रिन्यायेन चतुर्धा सर्वभोक्तारमित्युक्तं इति नकाऽप्यनुपपत्तिः । पदं पद्यते गम्यत इति पदं स्वोपासकप्राप्य-मित्यर्थः ।

भाष्योक्तभगवद्गुणानामुपनिषत्प्रतिपाद्यतां दर्शयति ।। **आनन्दमयइत्या-दिना** ।। 'आनन्दमयो ह्यानन्दभुगि' ति वाक्य इत्यर्थः ।। **एषइति** ।। 'एष सर्वज्ञ एपोऽन्तर्यामी'ति वाक्य इत्यर्थः । उक्तमिति सर्वत्र सम्बध्यते । यद्यप्यत्र ज्ञानवत्वमेवोक्तम् । तथाऽपि तस्य ज्ञानस्य प्रमाणान्तरबलेन तत्स्वरूपत्वस्य सिद्धत्वादेवमुक्तमिति मन्तव्यम् ।

ननु शक्तेः श्रुतावनुक्तत्वात् कथमस्य गुणस्योपनिषत्प्रतिपाद्यत्वमित्यत आह ।। **एषइति** ।। एष योनिः सर्वस्येति भगवतः सकाशात् सर्वसृष्टि-रुक्ता । साच तदुपयुक्तशक्तिं विना नोपपद्यत इत्यन्यथानुपपत्यैव शक्तिः सिद्धेति साऽपि तदभिप्रेतैवैति भावः ।। **त्रिकालेति** ।। 'यच्चान्यत् त्रिकालातीतमि' ति वाक्ये कालत्रयापादितविकारशून्यत्वरूपनित्यत्वमुक्त-मित्यर्थः ।। **प्रणवइति** ।। 'अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्यय'इति वाक्य इत्यर्थः ।। **स्थूलेति** ।। 'स्थूलभुग्वैश्वानरः' 'प्रविविक्तभुक्तैजस' आनन्दभुक्चेतोमुखः प्राज्ञ''इति वाक्यत्रये सर्वभोक्तृत्वमुक्तमित्यर्थः ।। **तुरीय-मिति** ।। 'विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुत'इति वाक्ये पदत्वं गम्यत्वमुक्तमित्यर्थः ।

**वरुणेन नारायणः स्तूयतइति** । मण्डूकरूपिणेत्येवं वाक्ये सति तथैवप्रतीकग्रहणे कर्तव्ये यदेवं वचनं तदाकाङ्क्षानुसारेणेति बोध्यम् । एवमुत्तरत्रापि ज्ञेयम् । तथा कुत्राचित्पदमनूद्यार्थं वदन् प्रतीकं गृण्हातीत्यपि ध्येयम् ।। **जाग्रदाद्यवस्थाभेदेति** ।। यथैक एवाकाशो घटाद्युपाधिभेदलब्ध-भेदो घटाकाशादिरूपेण व्यपदिश्यत एवं प्रतिशरीरमेक एव जीवो जाग्रदाद्यवस्थोपाधिभेदलब्धभेदो विश्वादिरूपेण व्यपदिश्यत इत्येतन्मतनिरा-सायेत्यर्थः ।। **इतीति** ।। इत्युक्तमित्यर्थः ।। **कश्चिदृषिरिति** ।। मण्डूकेन दृष्टा माण्डूकेति व्युत्पत्या मण्डूकोनाम कश्चिदृषिः प्रतीयत इत्यर्थः ।। **ध्यायन्नितीति** ।। भाष्ये प्रणवेन तुष्टावेत्यन्वयः ।

ननु प्रणवेन स्तुतौ कथमस्या वरूणो ऋषिर्हरिश्चदेवतेत्यत आह ।। **प्रणवेनेति** ।। उपनिषदा ओमित्येतदक्षरमिदं सर्वमित्यादिकया समग्रो-पनिषदा ।। **समस्तव्यस्तप्रणवप्रतिपाद्येति** ।। अकारोकारमकारनादात्मकः प्रणवः समस्तप्रणव इत्युच्यते । अकारादयः प्रणवांशा व्यस्तप्रणवा इत्युच्यन्ते । तत्र समस्तप्रणवप्रतिपाद्यं अक्षरं ब्रह्म । व्यस्तप्रणवप्रतिपाद्यो विश्वादिचतूरूपो हरिरिति ध्येयम् । भाष्यं व्याचिख्यासुर्भाष्ये आख्यातानि पदानि विहाय प्रथमं तावत् सामान्यत उपनिषत्प्रमेयावधारणाय समग्रोप-निषदं व्याचष्टे ।। **ओमिति यत् प्रणव प्रतिपाद्यामित्यादिना** ।। यत्तदक्षरं यद्वस्तु तदेतदक्षरं ब्रह्मेत्यर्थः ।। **प्रणवस्य ओंकारस्य प्रवृत्तिनिमित्तमिति** ।। ओंकारशब्दप्रवृत्तिनिमित्तमित्यर्थः ।। **त्रिकालातीतत्वमित्याहेति** ।। कालत्रय-कृतविकारशून्यत्वं प्रवृत्तिनिमित्तमाहेत्यर्थः । यद्यपि ओंकारशब्दप्रवृत्ति-निमित्तानि बहूनि सन्ति । तथाऽपि उपलक्षणत्वेन श्रुतिस्त्रिकालातीतत्वं प्रवृत्तिनिमित्तमाह । अत एव भाष्यकारेण 'ओतमत्रजगद्यस्मात् ओंतस्मा-द्भगवान् हरिः' इति प्रवृत्तिनिमित्तान्तरमुक्तम् । वक्ष्यति चैतद्भाष्य-व्याख्यानवसरे टीकाकारोऽप्येवमेवेत्यवधेयम् ।

ननु त्रिकालातीतत्वं कथमोंशब्दप्रवृत्तिनिमित्तमितिचेत् मैवम् । कालत्रय ओतत्वादेकरूपतया गतत्वात्प्रविष्टत्वाद्वा ओमितिव्युत्पत्या कालत्रयातीत-त्वस्य ओंशब्दप्रवृत्तिनिमित्तत्वसम्भवात् । अवधातोर्गतिप्रवेशाद्यनेकार्थ-

कत्वात् । उपव्याख्यानमिति विशिष्याख्यायतेऽनेनेति व्याख्यानं प्रवृत्तिनिमित्तम् । तस्य ओंकारस्य उपपन्नं योग्यं व्याख्यानमुच्यत इति शेषः । केचित्तु केन निमित्तेन ओंकारवाच्यं ब्रह्माक्षरमित्युच्यत इत्यतो न क्षरति कालत्रयेऽपीति व्युत्पत्या कालत्रयेऽप्येकप्रकारतया नित्यत्वहेतुनेति भावेन प्रवृत्तिनिमित्तमाह ।। **तस्येति** । तस्योमित्येतत्प्रतिपाद्यस्य अक्षरशब्दार्थत्वं उपपन्नं व्याख्यानमुच्यत इत्यप्याहुः । तदभिप्रायं नजानीमः ।

प्रणवस्याभिधेयमुक्तम् । प्रवृत्तिनमित्तं किमिति जिज्ञासायां त्रिकालातीतत्वमाहेति टीकायामुक्तत्वात् । "भाविभूतभवत्कालेष्वेकरूपतया हरिः । सर्वदानित्य इत्येषा व्याख्योंकारस्य कीर्तिते"ति भाष्येऽप्यभिहितत्वादिति । अक्षरशब्दस्याव्यवहितत्वाद्योजयति ।। **अक्षरमिति** ।। अतीतादिकाल एकरूपतया वर्तमानं त्रिकालतीतमित्यर्थः । नन्वोंकारप्रतिपाद्याक्षरस्यैव पूर्णत्वमुक्तम् । नतु पूर्णस्योंकारत्वमतः सर्वमोंकार एवेति कथमित्यतो योजयति ।। **ओंकार एवेति** ।। ओमित्याक्रियते प्रतिपाद्यत इत्योंकारः । ओंकारशब्दस्य कर्मणि घञन्तत्वेन घञन्ताःपुंसीत्युक्तेः पुल्लिङ्गता । ओंकारप्रतिपाद्यमक्षरमेव सर्वं पूर्णं नत्वन्यदित्यर्थः ।। **यच्चेत्यादिनेति** ।। यत् त्रिकालातीतं तदप्योंकार एव तत्प्रतिपाद्यमक्षरमेव नत्वन्यदित्यर्थः ।

नन्वक्षरं विना कथमन्यन्न त्रिकालातीतम् । प्रकृतिकालदेरपि त्रिकालातीतत्वादित्यत उक्तम् ।। **अन्यदिति** ।। अन्यदपि श्रीतत्वं त्रिकालातीतम् । तदुभयान्यत् कालादिकं त्रिकालातीतं नेत्युक्तपदावृत्या नञध्याहारेण योज्यम् । भाष्ये 'विना च प्रकृतिं नान्यत् कालातीतं परात्मन'इत्युक्तत्वात्। टीकायामपि यच्चान्यत् त्रिकालातीतमित्यत्र विनाच प्रकृतिं नान्यत् त्रिकालातीतमिति योज्यमित्युक्तत्वात् । एवं च ओंकार एवेत्येवकारेण कालादिकमेव व्यवच्छिद्यते न श्रीतत्वमपि । उक्तप्रमाणविरोधादिति भावः।

कालादेर्यथा न कालातीत्वं तथा 'कालश्चैव दिशो वेदा'इति भाष्यव्याख्यानावसरे निपुणतरं प्रतिपादयिप्याम इति ज्ञेयम् । यद्यपि यदन्यच्चित् प्रकृतिरूपं त्रिकालातीतमस्ति तदप्योंकार एव तद्वाच्यं ब्रह्मैव न ततोऽन्यत्तादृशमस्ति । श्रीत्त्वत्वे शश्वदेकप्रकारत्वरूपं कालत्रयातीतत्वं हि

ईशप्रसादायत्तं न स्वत इतिभावः । इति नञध्याहारमन्तरा व्याख्यातुं शक्यते । तथाऽपि तस्य स्पष्टत्वाच्छिष्यैरेवोह्यतामित्यभिप्रेत्याचार्यैर्नञध्याहारावृत्तिभ्यां व्याख्यानान्तरमेव कृतमित्यदोषः ।।

## श्रीमद्वादिराजयतिविरचितमाण्डूकोपनिषद्भाष्यटिप्पणी

## प्रकाशिका

**ताराभिधेयस्ताराभहारालंकारभासुरः ।**
**सारात् सारो हयशिरास्तारयेद् दुस्तरादरात् ।।**

**कुर्वे सर्वेशमानम्य सर्वाभिमदभेदिनीम् ।**
**माण्डूकोपनिषद्भाष्यटीकां शोकापहारिणीम् ।।**

'एतदक्षरम्'इत्यत्र नक्षरतीत्यक्षरमिति व्युत्पत्त्याऽक्षरं नाशरहितमित्यर्थः। इदं च 'अक्षरं ब्रह्म परमं कूटस्थमचलं ध्रुवम्' इत्यादौ केवलमक्षरशब्देनापि ब्रह्म कीर्त्यते । तद्वर्णात्मकत्वात् नाक्षरपदवाच्यं, किन्तु 'ओमित्येतद् ब्रह्म' इत्युक्ते यथा ओङ्कारवाच्यत्वेन ओमिति शब्द्यते तथोक्तव्युत्पत्त्या अक्षरपदवाच्यत्वेनैवेति प्रदर्शनाय ओङ्कारेण सह सङ्ग्रहः । अत एव 'भूतं भवद् भविष्यद्' इति वक्ष्यमाणनित्यत्वस्य न गतार्थता ।

इदं सर्वमिति श्रुतिवाक्यस्यायमर्थः-इदमेतदुपनिषत्प्रतिपाद्यं सर्वं सर्वगुणपूर्णत्वात् सर्वशब्दवाच्यं ब्रह्मेत्यर्थः । ओमितिपदवाच्यं यद्वस्तु, अक्षरपदवाच्यं यद्वस्तु एतदिदं एतदुपनिषदा प्रतिपाद्यं सर्वं सर्वपदोक्तं ब्रह्म, न तु जीवादिरिति योजना । सृगताविति धातोः सर्वे गुणाः सरन्ति गच्छन्ति सर्वदा तिष्ठन्त्यत्रेति सर्वपदं सर्वगुणपूर्णत्ववाचकमिति । लोकेऽपि हि सर्वे पदार्था अर्थतया यत्पदे तिष्ठन्तीत्येतदेव खलु सर्वपदप्रवृत्तिनिमित्तम् । इयांस्तु विशेषः । लोके सर्वपदप्रयोक्तुः सारासारजडाजडपदार्थानां विवक्षितत्वात् त एव योग्यतया सम्बध्यन्ते । ब्रह्मण्युपनिषदा प्रयुज्यमानसर्वशब्दस्य ब्रह्मनिष्ठा अपरिमितकल्याणगुणा एव योग्यतया सम्बध्यन्त इति । तस्मान्नापूर्वमिदं प्रमेयम् । अव प्रवेशन इति धातोः सर्वे शोभना गुणाः यस्मिन् ब्रह्मणि ओताः प्रविष्टाः सर्वदा ब्रह्मण्येव तिष्ठन्ति, न ततोऽन्यत्र गच्छन्तीत्यर्थः,इति स विष्णुरोमित्युच्यते।

अन्यथा ओङ्कारसर्वशब्दयोरैकार्थ्यं न स्यात् । यथाश्रुतार्थस्तु ओमित्येतदक्षरस्य सकलजगदात्मकत्वं सर्वजनानुभवविरुद्धत्वान्नाङ्गीकर्तुमुचितम् ।

जीवस्य ओङ्कारशब्दाभिधेयत्वाङ्गीकारेऽप्युक्तदोषानिस्तारादव्यर्थः परस्यायासः । एकैकजीवस्यापि सकलजडाजडप्रपञ्चात्मकत्वस्य स्वमतेऽप्यभावादनुपपन्न एवेति ज्ञेयम् ।

'यच्चान्यत् त्रिकालातीतम्' इति वक्ष्यमाणत्वात् 'भूतं भवद्भविष्यद्'इति कालत्रयसम्बन्धित्वोक्त्याऽपि अतीतघटादिपदार्थवत् त्रिकालवर्तिनस्तत्कालमात्रवर्तित्वाभावेन पूर्वकालातीतत्वम् । वर्तमानघटादिवत् त्रिकालवर्तिनो वर्तमानकालमात्रसम्बन्धित्वाभावेन वर्तमानकालातीतत्वम् । एवं भाविघटादिवत् त्रिकालवर्तिनः पदार्थस्य भाविकालमात्रवर्तित्वस्याप्यभावेन त्रिकालातीतत्वम् । एवं प्राङ्नष्टघटवन्नाशवदपि न, नङ्क्ष्यमाणवर्तमानघटवन्नाशवदपि न, भाविघटवत् प्रागभाववदपि नेति प्रागभावप्रध्वंसविधुरतया वर्तमानत्वाख्यं परमनित्यत्वमेव सिद्धम् । इदं च कालत्रयेऽप्योतत्वात् ओङ्कारपदेनाप्युच्यत इति तस्योपव्याख्यानमित्युक्तम् । इदं च नापूर्वम् । यथा पणत्रयवानेकैकपणवतः त्रीनपि पुरुषानत्येति तद्वदिति भावः । तर्हि कालत्रयसम्बन्धीत्येव कुतो नोच्यत इति चेन्न । मिलितत्वात् त्रयाणां घटादीनां प्रागुक्तरीत्या कालत्रयसम्बन्धित्ववद् ब्रह्मणोऽपि रूपबाहुल्येन न कालत्रयसम्बन्धित्वमिति सूचनार्थम् । 'यत् त्रिकालातीतं तत्सर्वमोङ्कार एव' इत्युक्ते प्रकृतेरप्योङ्कारात्मकत्वं स्यादतोऽन्यदित्युक्तम् ।

## श्रीसत्यप्रियतीर्थविरचिता भाष्यविवृतिः

**[१]अहल्या ............पदाम्भोज.............।**
**............तज्जनोद्धृत्यै तं ससीतमुपास्महे ।।**
**श्रीसीता जगतो माता शिवतातनुता सुता ।**
**जनकस्य ................वामाङ्कमवतादतः ।।**

इह खलु संसारकूपे निपतितमधिकारिजनं जननी तनयमिव परमात्मतत्वज्ञानेनोद्दिदीर्षुः इयं माण्डूकोपनिषद् इतिकर्तव्यातमन्तरेण न तत्वज्ञान-

१. प्रथमपत्रस्य आदिभागः अस्पष्टः ।

कारणतां आपद्यतेऽतस्तदितिकर्तव्यतारूपं न्यायगर्भभाष्यं करिष्यन्नाचार्यवर्यः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनं एतदुपनिपत्प्रतिपाद्यदेवताप्रणतिमादौ न्यभांत्सीत्।। **पूर्णेति** ।। पूर्णानन्दज्ञानशक्तयः स्वरूपं यस्येति बहुव्रीहिः । यद्यपि "न ध्याख्यापृमूर्च्छिमदा"मिति निष्ठा तस्य नत्वं न्यषेधीत्, तथापि "वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः"इति पूर्ण इति पूरी आप्यायन इति ण्यन्तस्य निपातितं रूपम् । नित्यम् अतिध्रुवम् उत्पत्तिविनाशरहितम् अत एव वररुचिरभाणीत् "त्यब्नेर्ध्रुव" इति अव्ययमिति कैमुत्येनानित्यत्वमुपापीपदत् । कैमुत्यं च यस्यावयवविश्लेषो नास्ति किं तस्य सर्वथा विनाशाभावः इति । अत एव गीताभाष्यटीकायां "अविनाशि तु तद्विद्धि" इति गीताव्याख्यानपरभाष्यगताव्ययं च तदित्येतद्व्याख्यानावसरे "विधानमेवेदं कैमुत्येन शापादिना विनाशाभावं साधयितुम्" इत्युक्तम् ।

अत्र "प्रज्ञानघन एव आनन्दमय" इति । आनन्दमयत्वं, "एष सर्वज्ञ" इति, ज्ञानरूपत्वं "एष योनिः सर्वस्ये"ति, सर्वसृष्ट्युपयुक्तत्वेन पूर्णशक्तिं चोपनिषद् अभ्यधात्। तत्समगृण्हात् ।। **पूर्णानन्दज्ञानशक्तिस्वरूपमिति** ।। कालातीतमित्यनेन प्रतिपादितं नित्यत्वं, प्रणवो अव्यय इति अव्ययत्वं, स्थूलभुक् प्रविविक्तभुक् आनन्दभुगिति सर्वभोक्तृत्वं तुरीयं पदमिति प्रतिपादितं पदत्वं तदिदं समगृण्हात् नित्यमव्ययं।। **चतुर्धा सर्वभोक्तारंपदमिति** ।।

यो ह वा अविदितार्षच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा अध्यापयति वा स्थाणुं वर्छति गर्ते वा पतति प्रवामीयते पापीयान् भवतीति" श्रुतेः । देवतादिज्ञानवत एव विद्या फलवतीत्यवाजीगमत् । विदितार्षच्छन्दोदैवतं च ब्राह्मणं च विदितार्षच्छन्दोदैवतब्राह्मणानि । न विद्यन्ते विदितार्षच्छन्दोदैवतब्राह्मणानि यस्मिन् इति विग्रहः । तत्र ब्राह्मणपदोपलक्षितमर्थज्ञानं व्याख्यानादेव भविष्यति। छन्दोज्ञानं तु केषांचिद् अक्षरगणनया अनुष्टुप्त्वेन सुकरं केषाञ्चिदच्छन्दोबद्धत्वमेव । ऋषिदेवते त्वजिज्ञपत् मण्डूकरूपिणा वरुणेन चतूरूपो नारायणः स्तूयत इति ।

अत्र नारायण इत्यनेन जाग्रदाद्यवस्थाभेदलब्धविश्वादिरूपो जीवोऽत्रोच्यते इत्येतन्निरास्थत् । मण्डूकोनाम कश्चिद् ऋषिरिति प्रतीतिनिरासाय वरुणेने-

त्युक्तम्। तत्र प्रमाणयति।। **ध्यायन्निति**।। प्रणवेन प्रणवार्थोपनिषदा । समस्तव्यस्तप्रणवप्रतिपाद्यमाह ओमित्यादिकयोपनिषदा। ओमिति प्रणवप्रतिपाद्यं यत्तज्जगदाश्रयत्वनिमित्तेन हर्याख्यम् ब्रह्म 'तदक्षरम्' ओमिति च । अवतेष्टिलोपश्चेति अवतेः प्रवेशनकर्मणो मन्प्रत्यये तस्य टिलोपे 'ज्वरत्वर' इति ऊठि गुणे "नेड्वशिकृति" इति इडभावे सिद्ध्यति । क्षरतीति क्षरं क्षरतेः विनाशसन्ततदानकर्मणः पचाद्यच् । न विद्यते क्षरं सन्ततदातृ यस्मात् तदिति वा । अथवा अश्नातीति अक्षरं, अश्नुते सर्वमिति वा अक्षरम् । [१]अकारवाच्यत्वाद्वा अक्षरं वाच्यवाचकयोरभेदव्यपदेशचायं "लोकः प्रथमा महानाम्नी"इत्यादौ दृष्टः। अत एव महाभाष्ये "अक्षरं न क्षरं विद्यादश्नातेर्वा सरोऽक्षरम् । वर्णं वाहुः पूर्वसूत्रे इत्यभ्याधात् । अश्नोतेरित्युपलक्षणम् । अश्नातेरपि सरप्रत्ययमेवेति । 'तितुत्रतथ सिसुसरकसेषु च'इति इडभावः । तदिदमक्षरमोंकार एव सर्वं पूर्णं न तु ततोऽन्यत् ।

सृ गतौ 'सर्वनिघृष्वेति' औणादिकवन्प्रत्ययान्तो निपातितः सर्वशब्दः । सरति सर्वत्रेति सर्वम् । सरति सर्वं गुणजातम् । अत एव महाभाष्ये ....[२]प्रत्ययावित्युक्तम्। न च तावता उणादौ श्रूयते तस्माद् वाहुलिकत्वम् । तस्य ओंकारस्य भूतं भवद् भविष्यदिति उपपन्नं व्याख्यानं पूर्णत्वादेव इति भावः । अनेनावतेर्व्याप्तिकर्मणो रूपमेतदिति ध्वनयति ।

सर्वशक्तं (त्वं) पूर्णत्वं ओमित्याक्रियमाणस्य विष्णोरेव । ओमित्याक्रियमाणं ब्रह्मैव त्रिकालातीतं अन्यच्च प्रकृतितत्त्वं तदपि त्रिकालातीतम् । एवकारेण प्रकृत्यतिरिक्तस्य प्रकृत्यभिमन्यमानकालदिग्वेदातिरिक्तस्य च कालातीतत्वनिरासः । तदिदं सर्वमभिप्रेत्याभ्यधात् भाष्यकारः ओमित्युक्तं यद्ब्रह्मेत्यदिना अन्यदिति विशेपणमित्यन्तेन । तथा "पूर्णस्तु हरिरेवैको नान्यत् पूर्णं कदाचन । विना च प्रकृतिं नान्यत् कालातीतं परात्मनः । कालश्चैव दिशो वेदा प्रकृत्यात्मान ईरिताः । अभिमानात्तु जीवनां नकालातीता भवेत् । मुक्तानामपि पूर्वत्र कालसम्वन्ध ईरित"इत्यनेन च।

---

१. अक्षरवाच्यत्वादिति पाठेन भाव्यमिति भाति ।

२. अत्र ग्रन्थः त्रुटितः ।

अत्र विना च प्रकृतिं नान्यदित्यनेन यच्चान्यत् त्रिकालातीतं तदेतदप्योंकार एवेति वाक्यं स्फुटं व्याक्शासीत् ।

## ताम्रपर्णी श्रीनिवासाचार्यविरचिता
## भाष्यार्थरत्नावलिः

**इंदीवरदरश्याममिंदिरानंदवर्धनम् ।**
**वन्दे नन्दसुतं कृष्णं श्रीमध्वार्यहृदब्जगम् ।।**

माण्डूकोपनिषदं यथावद् व्याचिख्यासुर्भगवानानन्दतीर्थमुनिः स्वयमन्तरायविधुरोपि प्रारिप्सितपरिसमाप्त्यादिसाधनतयाऽवगतं मंगलमाचारेणानुशिक्षयन् विशिष्टाधिकृतदेवतामुपश्लोकयन् प्रणमति ।। **पूर्णेति** ।। विष्णुं वन्देऽभिवादयामि । स्तौमिच । वंद्यत्वप्रयोजकं अध्यक्षरमधिमात्रमेकाक्षरमित्यादावुक्तं विशिष्ठत्वमाह ।। **परमुत्तममिति** ।। वैशिष्ट्यंच द्वेधा । गुणपूर्णत्वेन निर्दोषत्वेन च । तत्र आनन्दमयः एष सर्वज्ञ एष सर्वेश्वर इत्यादावुक्तं पूर्णगुणत्वमाह ।। **पूर्णानन्दज्ञानशक्तिस्वरूपमिति** ।। पूर्णा निस्सीमा आनन्दज्ञानशक्तयः स्वरूपं यस्य तमित्यर्थः । आनन्दमय इत्यत्र मयटः प्राचुर्यार्थत्वं तादात्म्यार्थत्वं च विवक्षित्वा पूर्णानन्दस्वरूपमित्युक्तं ।। **सर्वज्ञ इति** ।। सर्वपदेन ज्ञानस्य स्वपरगताखिलविशेषवत्वस्योक्तत्वात् पूर्णज्ञानेत्युक्तम् । यद्वा "चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपत"इति वक्ष्यमाणत्वात् चेतोमुखपदेनोक्तमेतदिति ज्ञेयम् । एष सर्वेश्वर इच्छामात्रं प्रभोः सृष्टिरित्युक्त्या पूर्णशक्तित्वलाभः । अत एव प्रभोः रित्येतत्पूर्णशक्तेः कुतो मायेति व्याकरिष्यत्याचार्यः । एष योनिः सर्वस्येत्युक्ता सर्वसृष्ट्युपयुक्तत्वेन च पूर्णशक्तित्वं सिद्धं। गुणेष्वानन्दस्योच्चता हेतुत्वेन फलरूपत्वात्। अननुभूयमानस्य तदयोगात् ज्ञानानन्दयोः ग्रहणं । शक्तेः सर्वगुणघटकत्वेन सर्वगुणलाभायोपन्यासः । तदुक्तं । "दोषास्पृष्टौ गुणपूर्तौ च निस्सीमत्वाद्विद्यते तस्य शक्ति"रिति । शुद्धानन्देत्यादावपि आनन्दस्य प्रथमं ग्रहणं कृतं। "सज्ञानानन्दशीर्पोसौ ज्ञानानन्द बलैस्त्रिवृत् । चिदानन्दैकदेहवान् । ज्ञानानन्दतनुं श्याम"मित्यादौ ज्ञानस्य प्राथम्यं त्वननुभूतस्योच्चताऽहेतुत्वादनुभवेभारमालंब्येति ज्ञेयम् । निर्दोषत्वाच्च विशिष्टत्वमिति भावेन

यच्चान्यत्त्रिकालातीतं प्रणवोव्यय इत्याद्युक्तम् । अनित्यत्वाद्यभावमुपलक्षणत्वेनाह ।। **नित्यमव्ययमिति** ।। नित्यं घटादिवत्स्वरूपतो ब्रह्मादिवद्देहतो दुःखप्राप्त्याऽपि अविनाशिनम् । अव्ययवमपूर्णताख्यव्ययरहितम् । दुःखादिदोषाणां अनित्यदेहसंबधप्रयुक्तत्वान्नित्यत्वं दोषान्तराभावोपपादकमित्यादौ उक्तम् । देहतोप्यविनाशिन्या दुःखास्पृष्टाया अपि रमाया अपूर्णताख्यनाशसद्भावात् तद्व्यावृत्तये पुनरव्ययग्रहणम् । मुक्तौ प्राप्यतयेष्टत्वाच्च वंद्यत्वमिति भावेन "तुरीयं पदमश्नुत"इत्युक्तं । मुक्तगम्यत्वमाह ।।**पदमिति**।। पद्यत इति पदम् । कार्यब्रह्मणोऽपि कार्यं वादरिरित्युक्तरीत्या प्राप्यत्वात् तत्साधारण्यव्यवच्छेदा, पदमुत्तमं प्राप्यमित्युक्तम् ।

नन्वस्यामुपनिषदि चत्वारः प्रतिपाद्यन्ते । विष्णुस्त्वेकः कथं विष्णोरत्र प्रतिपाद्यत्वं येन वंद्यत्वं स्यादित्यत आह ।। **चतुर्धेति** ।। विश्वादिरूपचतुष्टयेन स्थूलादिसर्वभोक्तारमित्यर्थः । तुरीयस्य मुक्तनियामकत्वात् मुक्तभोग्यभोक्तृत्वं सिद्धमेवेति चतुर्धेत्युक्तम् ।

ऋष्याद्यज्ञात्वा वेदविद्याभ्यासिनोऽनर्थोक्तेः । कियतो ग्रन्थस्य वाक्यत्वेन छन्दोबद्धत्वाभावात् शिष्टस्य त्वनुष्टुप्त्वावगमसम्भवादृषिदेवते आह ।। **माण्डूकेति** ।। गारुडे "ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः । अत्र श्लोका भवन्तीति चकारैव पृथक् पृथगि"ति वरुणो अस्या ऋषिरित्युच्यते । माण्डूकमित्युपनिषन्नामबलात् कश्चन मण्डूक ऋषिरित्यवगम्यते । अतो विरोध इत्यत उक्तम् ।। **मण्डूकरूपिणेति** ।। जाग्रदाद्यवस्थाहेतवो विश्वादयः सगुणस्य लीलावतारविशेषाः तुरीयस्तु निर्गुणः परमशिव एवेति शिवमद्वैतं चतुर्थमित्यादौ प्रतीयते । तव्द्यावृत्यर्थमुक्तम् ।। **चतूरूपो नारायण इति** ।। तत्र प्रमाणमाह ।। **ध्यायन्निति** ।। प्रणवेन ध्यायन्निति प्रणवमन्त्रार्थगुणविशिष्टतया ध्यायंस्तद्व्याख्यानरूपोपनिषदा तुष्टावेत्यर्थः । प्रणवाद्ययोपनिषदेति टीकायां ।

अथा"दुःखमितरत्सर्वं जीवा एवतु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषाप्रवर्तत" इति श्रुतेरधिकारिणां मोक्षार्थं प्रवृत्तायामुपनिषदि मोक्षस्य भगवत्प्रसादसाध्यत्वात्तस्यापरोक्षज्ञानं विनाऽयोगात्तस्य श्रवणमनननिदिध्या-

सनारूपोपासनां विनाऽनुदयात् । तदुपासनमवश्यमनुष्ठेयमिति भावेन श्रवणस्य शब्दसापेक्षत्वान्मननस्य युक्त्यानुसंधानस्य ग्राह्यप्रमाणसापेक्षत्वात् ध्यानस्य स्मृतिरूपस्यानुभावकप्रमाणसापेक्षत्वात् तत्किमित्यतः प्रणवः सर्ववेदेष्विति वचनादोंकारस्य सर्ववेदव्याख्येयतया सर्ववेदश्रेष्ठत्वात् लाघवात्तदेव श्रवणादौ करणमनुग्राहकमनुभावकं चेत्यभिप्रेत्य तद्व्याख्यातुं तत्प्रतिपाद्यं तावदुच्यते।। **ओमित्येतदक्षरमिति** ।। अत्र यदेतदोमित्यक्षरमिदं सर्वं तस्येदं सर्वमित्यस्य व्याख्या क्रियते ।। **किमिति** ।। **भूतं भवद् भविष्यदिति** ।। कालत्रयपरिच्छिन्नं सर्वमोंकार एवेति न केवलं कालपरिच्छिन्नं सर्वमोंकारः किन्तु यदन्यत् त्रिकालातीतं अपरिच्छिन्नं ब्रह्म तदप्योंकार एव। कुतः हि यस्मादेतद्ब्रह्म सर्वं सर्वात्मक इति सर्वं खल्विदं ब्रह्मेत्यादावुक्तं । तस्मादित्यर्थः । न केवलं सर्वं ब्रह्म किन्त्वयथात्मा जीवोऽपि ब्रह्म सगुणं निर्गुणंच ब्रह्मेत्यर्थः । तदुपपादनं सोऽयमात्मेति । सोऽयमात्मा जीव एव। चतुष्पात्। कथं । सगुणो विश्वादिः पादत्रयं निर्गुणस्तुरीयः चतुर्थपाद इति चतुष्पादित्यस्यैव प्रपञ्चनार्थं जागरितस्थान इत्यादिकमित्यन्यथाप्रतीतेः प्रमाणेन यथावद्व्याचष्टे ।। **ओंमित्युक्तमिति** ।। उपनिषदि ब्रह्मेति वक्ष्यमाणमनुकृष्यते । तथाच तदेवं योजना यदोमिति नामकमेतदब्रह्म । यदोमितिनामकं ब्रह्मैतदक्षरमिति । तदिदं योजनाद्वयमभिप्रेत्योक्तं ओंमित्युक्तमिति । अत्रेयं योजना यदोमिति प्रणवेन विशेषतो मुख्यत उक्तं तदोमिति ब्रह्मेत्यादौ ब्रह्मेत्युदाहृतमिति । अन्यथोमित्युक्तस्य ब्रह्मत्वासिद्धावसिद्धस्यानुवाद इति प्राप्तेः । ततश्च यदोमित्यनेन मुखत उक्तं परं ब्रह्म तद्विष्णाख्यमक्षरमेवेत्यक्षरं ब्रह्म परममित्यादावुदाहृतं परंचापरंच ब्रह्म यदोंकार इति श्रुतेश्चतुर्मुखस्योमित्युक्तब्रह्मत्वेऽपि मुख्यतः तदभावादिति भावः ।

एवमोंकारप्रतिपाद्यो विष्णुरित्युक्त्वा विष्णावोंकारस्य वृत्तिरित्यतः तद्व्याक्रियते ।। **इदमिति** ।। इदं सर्वमिति तस्योंकारस्य उपपन्नं अवयवार्थानुगुणं प्रमाणानुगुणंच व्याख्यानमित्यर्थः । इदमित्यस्य विभक्तिविपरिणामेनास्मिन् सर्वं जगदाश्रितमित्येतदर्थतया व्याचष्टे ।। **ओतमिति** ।।

अत्राक्षरे । जगत्प्रकृत्यादि । "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"ति श्रुतेः। अवतेष्टिलोपश्चेति सूत्राद्गत्याद्यर्थस्यावतेर्मनिन्प्रत्ययः। प्रत्ययस्य टेर्लोपः । "ज्वरत्वरेत्यादिनो"ठि कृते गुणेच रूपमिति भावः । विभक्तिविपरिणामं विना गुणपूर्तिप्रतिपादकतयाऽपीदं सर्वमित्येतद्व्याचष्टे ।। **तदिदमिति** ।। तदिदमोंकारप्रतिपाद्यमक्षरं गुणपूर्त्यैव सर्वमित्येवं शब्दितं नतु सर्वात्मकत्वादित्येवार्थः । "एवाख्येवैवाहीत्यादौ एवशब्द एवंशब्दार्थः प्रसिद्धः। अनेन"ओतत्ववाची ह्योंकारो वक्त्यसौ तद्गुणोततामि"त्युक्तरित्या गुणपूर्णत्वमोंकारार्थतया लभ्यत इत्युक्तं भवति। कालतः पूर्त्यर्थतयाप्योंकारो व्याक्रियते ।। **भूतमिति** ।। भूतमतीतकाले विद्यमानं भवद्वर्तमानकाले विद्यमानं भविष्यदेष्यत्काले विद्यमानमितिच तस्योपोव्याख्यानमितिच योजना । ओतत्ववाचिन ओंकारस्य सर्वेष्वपि कालेष्वोतत्वार्थकत्वादेतद्व्याचष्टे ।। **हरिर्नित्य इत्येषा व्याख्योंकारस्य कीर्तितेति** ।।

ननु नित्यत्वमव्याकृताकाशादीतरसाधारणमित्यतो नित्यत्वं विवृतं भाविभूत भवत्कालेष्वेकरूपतयेति कालत्रये एकप्रकारत्वंच कदाचित्कदाचिदिति न मन्तव्यमिति भावेनोक्तम् ।। **सर्वदेति** ।। कालत्रयकृतविकारशून्यत्वेन त्रिकालातीत्वमोंकारार्थमितिभावः । अत एव ओमितिनामकमक्षरं अविनाशीत्युक्तं । ननु सर्वमोंकार एवेति ओंकारस्य सर्वत्वमुच्यते कथमेवं सति ओमित्युक्तब्रह्मणः पूर्णत्वपरमिदं सर्वमिति वाक्यं स्यादित्यतस्तद्व्याचष्टे ।। **ओमित्याक्रियतइति** ।। एवकारव्यावर्त्यमुक्तं ।। **तदिति** ।।

ननु यदि विष्णुरोंकारः सर्वत्वंच पूर्णत्वं तर्हीदं सर्वमित्यनेन पुनरुक्तं स्यादित्यत आह ।। **सर्वमिति** ।। यद्यन्यदपि पूर्णं स्यात्तर्ह्योमिति नामकमक्षरमिति विशेषनिर्धारणमयुक्तमित्याशंकानिरासायोक्तं सर्वमोंकारएवेत्यत् पूर्णत्वस्यासाधारण्य व्युत्पादकमिदमिति भावः ।

ननु त्रिकालपरिच्छिन्नं सर्वमोंकारएव यदन्यत् त्रिकालातीतं ब्रह्म तदप्योंकार एवेत्यत्र कथने न पौनरुक्त्यं । भवत्पक्षेतु पौनरुक्त्यं भूतंभवद्भविष्यदित्यनेनैव ब्रह्मणः त्रिकालातीतत्वस्य प्रतिपादितत्वादित्यत आह ।। **त्रिकालातीतत्वंचेति** ।। यदि ब्रह्मान्यदपि त्रिकालातीतं स्यात्तर्ह्योमित्यु-

क्तमक्षरं भूतंभवद्भविष्यदिति विशिष्य कथनमयुक्तमित्याशंक्य पूर्णत्वमिव त्रिकालातीतत्वंच तस्यैव नान्यस्येति वक्तुं यच्चान्यदिति वाक्यं प्रवृत्तमित्यपौनरुक्त्यमिति भावः ।

ननु तर्हि यत् त्रिकालातीतं तदप्योंकारएव नान्यदित्येतावता पूर्णत्वादन्यदित्यधिकं विरुद्धं च त्रिकालातीतस्य पूर्वोक्तान्यत्वाभावादित्यत आह ।। **प्रकृतेरिति** ।। यत् त्रिकालातीतं तदोंकार एवेत्युक्ते बाधः । चित्प्रकृतेरपि कालातीतत्वात् । अतः प्रकृतेरन्यत् त्रिकालातीतं तदप्योंकार एवेत्यन्यत्वविशेषणं युक्तमित्यर्थः ।

## श्रीनिवासतीर्थविरचिता भाष्यार्थविवृत्तिः
## पदार्थदीपिका

**चक्षुरादिस्थितो योहिजाग्रदादिप्रवर्तकः ।**
**विश्वादिरूपी तं व्यासं वंदेऽहं मध्ववभं ।। १ ।।**

**श्रीमदानंदतीर्थार्याञ्जयार्यादींश्च सन्मुनीन् ।**
**नमामि परया भक्त्या स्मृत्या सर्वेष्टदायकान् ।। २ ।।**

**येन वेदांतभाष्याणि विवृतानि महात्मना ।**
**तं वन्दे व्यासतीर्थाख्यं जयराजनिषेवकं ।। ३ ।।**

**प्रणम्य यादवाचार्यगरूणां पादपंकजे ।**
**मांडूकोपनिषद्भाष्यविवृतिः क्रियते मया ।। ४ ।।**

इहामुत्रफलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः आत्यंतिकानिष्टनिवृत्तीष्टप्राप्त्यर्थं तत्साधनभगवत्सेवरूपप्रतिपादनाय प्रवृत्तापीयं मांडूकोपनिषदन्यैरन्यथा व्याख्यातत्वेन तज्ज्ञापनासमर्थेति मन्यमानो भगवानाचार्यस्तां यथावद्व्याचिख्यासुरभीष्टसमाप्त्याद्युपायतया शिष्टाचारपरंपरावगतमेतदुपनिषत्प्रतिपाद्यगुणवद्भगवत्स्तुतिनतिरूपं मंगलं गुणप्रधानभावेन शिष्यशिक्षार्थमादावुपनिबध्नाति ।। **पूर्णेति** ।। अहं विष्णुं विश्वादिरूपिणं नित्यं सदा वंद इति क्रियाकारकसंबंधः । नित्यं वंद इत्यनेन न मम नारायणवंदनं प्रत्यूहविरहादिप्रयोजनोद्देशेन किंतु स्वभावत एवेति सूचयति ।

पूर्वटीकाकारास्तु नित्यत्वस्य भगवद्विशेषणत्वमङ्गीकृत्य अव्ययपदेन पुनरुक्तिरितिव्याचक्षते ।

नन्वदेहश्चेदसर्वज्ञः शिलाकाष्टादिवत्सदा । देहीचेदंतवानेव यज्ञदत्तनिदर्शनादिति शंकायां द्वितीयं पक्षमंगीकृत्य तत्रोक्तदोषपरिहारायोक्तं ।। **पूर्णानंदज्ञानशक्तिस्वरूपमव्ययमिति** ।। पूर्णानंदज्ञानशक्त्या एव स्वं स्वकीयं रूपं देहो यस्यासौ तथोक्तः । अत एव अव्ययं नाशशून्यं । कर्मापादितजडदेहस्यैव तदापादकत्वात् । विष्णुदेहस्य चातथात्वादिति भावः । अत्रानंदस्य पूर्णत्वं नाम दुःखासंभिन्नत्वम् अपरिच्छिन्नत्वं च । ज्ञानस्य पूर्णत्वं स्वपरगताशेषविशेषविषयकत्वं । शक्तेः पूर्णत्वमप्रतिबद्धत्वमिति द्रष्टव्यं । वक्ष्यतेच आनंदमय इति पूर्णानंदत्वं । एष सर्वज्ञ इति पूर्णज्ञानत्वं । एष योनिः सर्वस्येति सर्वस्रष्टृत्वोक्त्याऽर्थात्पूर्णशक्तित्वं । प्रभुरव्यय इति प्रणवोऽव्यय इत्यव्ययत्वं चेतिद्रष्टव्यं ।। **चतुर्धेति** ।। विश्वादिरूपेण चतुर्धा नेत्रादिस्थानेषु स्थित्वा स्थूलादिसर्वविषयभोक्तारमित्यर्थः । वक्ष्यते चैतत्स्थूलभुक्प्रविविक्तभुगानंदभुगिति ।

ननु तुरीयस्य भोगानुक्तेश्चतुर्धा सर्वभोक्तारमिति कथमुक्तमितिचेन्न । आनंदभुगित्यस्य तूरीयेऽपि ग्राह्यत्वादित्याशयात् । नन्वेवंभूतस्य विष्णोर्वेदनेन किंफलमित्याशंकायां तत्प्राप्तिरेवेत्याशयेनोक्तं ।। **पदमिति** ।। पद्यत इतिपदं प्राप्यमित्यर्थः । अर्चिरादेर्मार्गस्य कार्यब्रह्मणश्च ज्ञानिप्राप्यत्वात् कथं विष्णोरेव पदत्वमित्यत उक्तं ।। **परमिति** ।। एतदपि तुरीयं पदमश्नुत इत्यनेनोक्तं । अनेन विश्वादिरूपी विष्णुर्विषयः । तत्प्राप्तिः प्रयोजनं । योग्यस्तदिच्छुरेवाधिकारी । यथायोग्यं संबंध इति सूचितं । तेन निर्विषयत्वादिप्रयुक्तानारंभणीयत्वशंका निरस्तेति ज्ञातव्यं ।

"ननु योहवा अविदितार्षछंदोदैवतब्राह्मणेन मंत्रेण यजति याजयति वाध्यापयतिवा स्थाणुं वर्छति गर्ते वा पद्यते प्रवामीयते पापीयान् भवती"ति श्रुतौ ऋष्याद्यज्ञात्वा विद्याभ्यासिनोऽनर्थोक्तेस्तत्परिगणनयाऽनुष्टुप्त्वावगमसंभवाद् ब्राह्मणपदोपलक्षितार्थज्ञानस्य व्याख्यानादेव सिद्धेः ऋषिदेवते आह भगवान् भाष्यकारः।। **मंडूकरूपिणा वरूणेनेत्यादिना**।। नन्वस्या उपनिषदो

वरुणऋषिरित्ययुक्तं । मांडूकोपनिषदिति प्रसिद्धिपर्यालोचनयैव मंडूकनामा कश्चिदृषिरिति प्रतीतेरित्यत उक्तं ।। **मंडूकरूपिणेति** ।। अत्र जाग्रदाद्यवस्थाभेदभिन्नो विश्वादिरूपो जीव एवोच्यत इत्यपव्याख्याननिरासाय नारायण इत्युक्तं ।

नन्वत्र विश्वादीनां चतुर्णां प्रतिपाद्यत्वाद् भगवतश्चैकमेवाद्वीतीयमित्येकत्वोक्तेः कथमेतदित्यत उक्तम् ।। **चतूरूप इति** ।। इममर्थं प्रमाणसंवादेन द्रढयति ।। **ध्यायन्निति** ।। प्रणवेन प्रणवोपक्रमया ओमित्येतदक्षरमित्यादिकया समग्रोपनिषदा तुष्टावेत्यन्वयः । चतूरूपमितिशेषः । ओमित्येतत् अक्षरमिदं सर्वमिति वाक्यं ओमित्येतदक्षरं ओमित्ययं वर्ण इति यथा श्रुतप्रतीतेरोंकारस्य सर्वात्मकत्वाभावेनानुपपन्नतया ओंमित्येतदक्षरप्रतिपाद्यं ब्रह्मैवेदं सर्वं जगदिति परेण व्याख्यातं । तदसत् । "विभूतिं प्रसवंत्वन्य" इति ब्रह्मणः सर्वात्मकत्वस्य पूर्वपक्षत्वेनोक्तत्वात्प्रमाणविरोधाच्चेति भावेन वाक्यभेदमंगीकृत्योमित्येतदक्षरमिति वाक्यं तावद्व्याचाष्टे ।। **ओमित्युक्तमित्यादिना** ।। प्रणवस्याक्षरनामकं ब्रह्मैवाभिधेयं इत्युक्त्वा तस्य तत्र प्रवृत्तौ निमित्तं कथ्यते तस्योपव्याख्यानं भूतं भवद्भविष्यदितीति । तदुपलक्षणपरमिति सूचनाय स्वयमर्थांतरमाह ।। **ओतमत्रेति** ।। प्रविष्टमित्यर्थः । अव रक्षणगतिकांतिप्रवेशेत्यादिधातोः प्रवेशार्थस्यावतेः कर्मणि मनिन्प्रत्यये प्रत्ययस्य टेर्लोपे ज्वरत्वरेत्यादिनोपधाकारस्य वकारस्य चोठि सवर्णदीर्घे च सति "ऊम्" इति जाते सार्वधातुकार्धधातुकयोरिति गुणेच सति ओमिति भवति । अवतिर्नामायं धातुर्गतिकर्मानुप्रवेशनकर्माचेत्यन्यत्राप्येवमेव निरुक्तत्वाच्च । तथाच प्रविष्टत्वमोंकारार्थः । तच्च केनेति कर्त्रपेक्षायां जगतो योग्यतया संबंधः। तथाच जगता प्रविष्टत्वादोमित्युच्यते । ओतमत्र जगदित्यादितु फलितार्थकथनमिति ज्ञातव्यम् ।

ननु वाक्यभेदांगीकारो व्यर्थः । इदं सर्वमित्यनेनेदमक्षरं सर्वमिति सर्वात्मकत्वस्यैव प्रतीतेरित्यतस्तद् व्याचष्टे ।। **तदिदमिति** ।। तदिदमोंकारप्रतिपाद्यमक्षरनामकमेव ब्रह्म गुणपूर्त्यैव सर्वमिति शब्दितमिति न सर्वाभेदेनेति योजना । तस्योपव्याख्यानं भूतंभवद्भविष्यदितीतिवाक्येन

जीवादिसाधारणं स्वरूपनित्यत्वमोंकारप्रवृत्तिनिमित्तमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ।। **भावीति** ।। बहुकालीनत्वादिना नित्यत्वस्यौपचारिकत्वनिरासाय सर्वदेत्युक्तमित्याहुः । वस्तुतस्तु भाविभूतभवत्कालेष्वित्यनुवादेन सर्वदेति व्याख्यानं । तथाच सर्वदैकरूपतया नित्यइत्यर्थः ।

ननु भूतं भवद्भविष्यदिति श्रुतौ कालत्रयसंबंध एव हरेः प्रतीयते नतु कालत्रयकृतविकारशून्यत्वापरपर्यायं सर्वदैकप्रकारत्वमिति चेत्सत्यं । यच्चान्यत् त्रिकालातीतमित्यनुवादान्यथानुपपत्त्या कालत्रयकृतविकारशून्यत्वस्यात्र विवक्षणीयत्वादिति। तस्योपव्याख्यानमित्यस्यार्थ इत्येषा व्याख्येति। विशेषेणाख्या व्याख्या । प्रवृत्तिनिमित्तमिति यावत् ।

नन्वोंकारप्रतिपाद्यस्याक्षरस्येदं सर्वमिति पूर्णत्वस्योक्तत्वात् सर्वमोंकार एवेति व्यर्थमित्यतः प्रमाणोदाहरणेन व्याचष्टे ।। **ओमित्याक्रियत इति** ।। ननु कथमनेनास्य वाक्यस्य सार्थक्यमित्यतस्तन्नान्यस्य हरेः क्वचिदिति प्रमाणशेषोक्तमेवाभिप्रायं विशदयति ।। **सर्वमिति** ।। पूर्वं इदं सर्वमिति निरवधारणमुक्तत्वेन भगवदन्यस्यापि पूर्णत्वं स्यादित्याशंकापरिहारायान्यस्य पूर्णत्वनिवारणं कर्तुं सर्वमोंकार एवेत्युक्तमतो न वैयर्थ्यमिति भावः । एतेन सर्वमोंकार एवेति ओंकारस्य सर्वजगदात्मकत्वस्योक्तत्वात्पूर्वाक्यार्थोऽपि तथैव नेय इति परास्तं ।

ननु भूतं भवद्भिविष्यदित्यनेन कालत्रयकृतविकारशून्यत्वापरपर्यायस्य त्रिकालातीतत्वस्योक्तत्वाद्यच्चान्यत् त्रिकालातीतं तदप्योंकार एवेति व्यर्थमित्यत आह।। **त्रिकालातीतत्वं चेति**।। कालत्रयकृतविकारशून्यत्वमित्यर्थः । तथाच भूतंभवद्भविष्यदिति निरवधारणमुक्तत्वेनान्यस्यापि कालातीतत्वं स्यादिति शंकापरिहाराय त्रिकालातीतं तदप्योंकार एवेत्युक्तमतो न वैयर्थ्यमितिभावः । नन्वत्रान्यदिति विशेषणं किमर्थं इत्यत आह।। **प्रकृतेरिति**।। चेतनप्रकृतेरित्यर्थः । अयमाशयः । भगवत्योंशब्दस्य प्रवृत्तौ न त्रिकालातीतत्वं निमित्तं । तस्य चेतनप्रकृतिसाधारणत्वेन भगवद्धर्मत्वायोगात् । अतोऽन्यदित्युक्तं।तथाच चेतनप्रकृत्यन्यत्वेसति त्रिकालातीतत्वं पर्यवस्यति। इदं च भगवदसाधारणमेवातिव्याप्त्यभावादिति ।।

## उपनिषत्

**सर्वं ह्येतद् ब्रह्म। अयमात्मा ब्रह्म ।**
**सोऽयमात्मा चतुष्पात् ।।**

## भाष्यम्

"परमं यो महद् ब्रह्म", "तदेव ब्रह्म परमं कवीनाम्", "पूर्णमदः पूर्णमिदम्" इत्यादिषु प्रसिद्धं च ब्रह्मणः पूर्णत्वमित्याह - "सर्वं ह्येतद् ब्रह्म" इति । श्री ब्रह्मादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते । जीवानामस्वातन्त्र्यदर्शनात् सोऽपि स एवेति दर्शयति -

अयमात्मा ब्रह्म इति ।

'पूर्णस्तु हरिरेवैको नान्यत् पूर्णं कदाचन ।
विना च प्रकृतिं नान्यत् कालातीतं परात्मनः ।।

कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः ।
अभिमानात्तु जीवानां न कालातीतता भवेत् '।।

मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः ।
पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः ।।

सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
आदानादनकर्तृत्वादात्मा तेषामगोचरः ।
इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम्" ।।

इति हरिवंशेषु ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - ब्रह्मणः पूर्णत्वं कुत इत्यतस्तत्र प्रमाणं सूचयन्नाह ।। **सर्वं ह्येतदिति** ।। एतदक्षराख्यं ब्रह्म सर्वं पूर्णं हीति योजना ।

ननु कथं ब्रह्माख्यो विष्णुरेव पूर्णस्त्रिकालातीत इति च । ब्रह्मादीनां नियामकस्यापि कस्यचित्पूर्णत्वत्रिकालातीतत्वयोः स्वीकर्तव्यत्वादित्यतः सोपिविष्णुरेवेत्याह ।। **अयमात्माब्रह्मेति** ।। एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमुक्त्वा प्रणवांशैरकारोकारमकारनादैः प्रतिपाद्यविश्वादीनामुपास्ति-

मकारउकारोमकार इत्यत्र वक्तुं प्रस्तावयति ।। **सोयमात्माचतुष्पादिति** ।।

**भाष्यार्थः** - सर्वंह्येतद् ब्रह्मेति वाक्यं इदं सर्वमित्यनेनैकार्थत्वप्रतीतिं निवारन् हिशब्दसूचितप्रमाणान् उदाहृत्य तात्पर्यकथनपषर्वमवतारयति ।। **परमिति** ।। अयमात्मा ब्रह्मेति वाक्यं जीवस्य बेरह्मात्मकतापरत्वप्रतीतिं निवारयंस्तन्निवर्त्यामाशंकां च प्रदर्शयन् व्याकुर्वन्नेनेवावतारयति। **श्रीब्रह्मेति**। आदानादिकर्तेत्यात्मशब्दार्थमाह । प्रतीयतेऽनुमानेन । जीवानामादानादिकर्तृत्वेन प्रेरकः कुतोऽनुमेय इत्यत उक्तं जीवानामस्वातंत्र्यदर्शनादिति । इष्टानिष्टाकार्येष्विति शेषः । हरिरेव पूर्णः त्रिकालातीतश्च । स एव रमाद्यंतर्गतःसन् प्रेरकश्चेत्येतत्प्रमाणेन द्रढयति ।। **पूर्ण इति** ।। सर्वं ओंकार एव इत्यत्र पूर्णःयच्चान्यत् त्रिकालातीतमित्यत्र विनाच प्रकृतिं नान्यत्कालातीतमिति योज्यं ।

ननु कथं प्रकृतिं विना परमात्मनोन्यन्नकालातीतमिति कालादेः कालातीतत्वादित्यत आह ।। **कालश्चेति** ।। प्रकृत्यात्मानश्चेतनप्रकृत्यभिमानवंतः जडप्रकृतयश्च । अयःशलाकावद्दीर्घस्यैकस्यैव कालस्याभावान्निमेषादेश्च "सर्वे निमेषा ज्जज्ञिरे" इत्यादि श्रुतेः उत्पत्तिभावात् सर्वस्यापि जडत्वेन विक्रियाऽसंभवेन कालातीतत्वमिति भावः । जीवचेतनानां कालातीतत्वमस्ति नन्वित्यतआह ।। **अभिमानादिति** ।। शरीराद्यभिमानकृतविक्रियासद्भावान्न जीवानां कालातीतता भवेदित्यर्थः । ननु मुक्तानां अस्ति कालातीतता तेषां शरीराद्यभावेन तदभिमानकृतविक्रियाभावादित्यत आह ।। **मुक्तानामपीति** ।। सर्वं ह्येतद् ब्रह्मेत्युक्तं सदा पूर्णत्वं च सर्ववेदतो विष्णोरेव प्रसिद्धमिति योजना । सोऽयमात्मेत्युक्तः परमात्मा रमाब्रह्मरुद्रानंतादिगः सदा । तेषां आदानादिकर्तृत्वादात्माऽस्माकमगोचरः सोऽयं विष्णुरितिच स्वोक्तदार्ढ्यायाभ्यासः।

## गूढकर्तृका टीकाटिप्पणी

।। **प्रमाणं सूचयन्निति** ।। हिशब्दसूचितप्रमाणानि परमं यो महद् ब्रह्मेत्यादीनि भाष्यकार एव वक्ष्यति ।। **पूर्णंहीति** ।। सर्वमित्यस्य छायाव्याख्यानमेतत्।। **त्रिकालातीत इति चेति** ।। अस्य इत्यतइत्यनेन अन्वयः।

काऽनुपपत्तिरित्यत आह ।। **ब्रह्मादिनियामकस्यापीति** ।। जीवानां हिताहितक्रियास्वस्वातन्त्र्यानुभवात् तेष्वपि कश्चिदस्ति नियन्तेत्यनुमितस्यापि यस्य कस्यचित् गुणपूर्णत्वादेरपेक्षणीयत्वादित्यर्थः ।। **सोपीति** ।। ब्रह्मादिनियन्ताऽक्षराख्यो विष्णुरेव नान्य इत्यर्थः ।। **अयमात्मा ब्रह्मेतीति** ।। आत्मा यः श्रीब्रह्मादिष्वादानादिकर्तृतया स्थितः सोऽयं ब्रह्म प्रणवप्रतिपाद्यं ब्रह्मैव नत्वन्यः कश्चिदित्यर्थः। येन तस्यैव पूर्णत्वादिकं नस्यादितिभावः ।

।। **अकारोकारमकार इत्यत्रेति**।। "अकार उकार मकार इति जागरितस्थानो वैश्वानरोऽकारः प्रथमात्रे"ति तृतीयखंड इत्यर्थः ।। **सोऽयमात्मा चतुष्पादितीति** ।। सः समस्तप्रणवप्रतिपाद्य आत्मा रमाब्रह्मादिनियामक अयं मूलरूपी विष्णुश्चतुष्पात् । चत्वारः पादा अंशाःस्वरूपभूता यस्य स तथा । पादपदस्य संख्यासुपूर्वस्येति अन्त्यलोपः ।

## प्रकाशिका

ननु प्रकृतेरन्यच्च कालाकाशादित्रिकालातीतमस्ति । तस्याप्योङ्कार शब्दवाच्यत्वं स्यादित्यत उक्तं भाष्ये ।। **कालश्चैव दिश इत्यादि** ।। जडं वस्तु प्रकृतिर्वा प्राकृतं वा नान्यत् । अतो कालादिकमपि महदादिवद्विकाराभावे प्राकृतत्वायोगात् प्रकृत्यात्मकमेव । विशिष्य व्यवहारस्तु पृथिव्यात्मकसप्तद्वीपपर्वतादीनामिव किञ्चिद्विशेषमाश्रित्यैवेति ज्ञेयम् । तर्हि प्रकृतेरपि कालातीतत्वादोङ्कारपदवाच्यत्वं स्यादिति न शङ्कनीयम्। प्रकृतेस्त्रिकालातीतत्वं भगवतः कालातीतत्वाद्विलक्षणमेव । चित्प्रकृत्यादीनां पराधीनविशेषावाप्तिरूपविकारसद्भावात् केनापि प्रकारेण विकाररहिततया त्रिकालातीतत्वस्य भगवत्येव सम्भवात् । ओमिति पदं च मुख्ये सत्यमुख्यायोगात् सर्वपदोक्तगुणपूर्त्यसम्भवाच्च नान्यस्य वाचकम् । सर्वथाऽनित्यमहीमहीधरादिवत् प्रकृतिर्नानित्या, किन्त्वेकेन रूपेण तस्याः नित्यत्वमस्तीति सूचनाय जडप्रकृतेः प्रागविवेचितकालातीतत्वमात्राङ्गीकर इति ज्ञेयम् । तदुक्तं-'पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यं त्रिधा प्रोक्तम्' इति ।

ननु रमायां ब्रह्मादिजीवेषु च आदानादनादावस्वातन्त्र्यदर्शनेन कश्चिन्नियामको वाच्यः । कथमन्यथा भुञ्जानः स्वजिह्वामेव खादेत्, स्वानपेक्षितदुःखं च कथमुपाददद्यात् । स च नियामकः अनाद्यनन्तकालीनजीवनियामकत्वात् स्वतन्त्रत्वाच्च भगवानिव मुख्यः कालातीत इति चेत्, सत्यम् ।

'यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैस्तिर्यग्योनिष्वसङ्गतैः ।।' इति

'तत् सृष्ट्वा तदेवानुप्राविशत्' इति स्मृतिश्रुतिबलेन सोऽपि भगवानेवेत्याह ।। **अयमात्मा ब्रह्मेति** ।। आदानादनकर्तृत्वादित्यत्र जीवानां यदादानं यच्चादनं तत्रानपेक्षितदुःखादेरादाने अनपेक्षितविषादेरदने चास्वातन्त्र्यदर्शनादित्यर्थः ।

## भाष्यविवृतिः

ननु सर्वं ह्येतद्ब्रह्मेति व्यर्थं सर्वमोंकार एवेति ओंकारस्य पूर्णतया अभिधानात् । नैष दोषः । सर्वं ब्रह्मेत्यनुवादेन "हि"इति तत्र "तदेव ब्रह्म परम् कवीनां, 'परमं यो महद्ब्रह्म' 'पूर्णमदः' इत्यादि प्रमाणप्रसिद्ध्यभिधानात् । तदभ्यधात् ।। **परमं य इति** ।। प्रमाणभाष्ये च पूर्णत्वं तु सदा विष्णोः प्रिसिद्धं सर्वदैव तु (सर्ववेदतः) इत्यंशेन ।

ननु कथं ब्रह्माख्यो विष्णुरेव त्रिकालातीतः, श्रीब्रह्मादिसकलदेहेषु स्थित्वा आदानादिकर्ता अपर एव त्रिकालातीतः पूर्णश्च स्यात् । परं तु सोयं नापरः ब्रह्मैवायं श्रीब्रह्मादिषु स्थित्वा आदानादिकर्ता जीवस्यास्वातन्त्र्यात् । तदप्यवोचत् श्रीब्रह्मादिष्वित्यादिना ब्रह्मेतीत्यन्त्येन । प्रमाणंभाष्ये च सोऽयं विष्णुरित्यारभ्य हरिवंशेष्वित्यन्त्येन । एवं समस्तप्रणवप्रतिपाद्यमभिधाय अधुना अकारोकारमकारनादानां प्रतिपाद्यं अकारोकारमकार इत्यादिना वक्तुं वस्तुतस्तत्प्रतिपाद्याश्चतस्त्रो देवताः साकारं दर्शयति ।। **सोऽयं इति** ।। सोऽयमात्मा श्रीब्रह्मादिषु स्थित्वा आदानादिकर्ता विश्वतैजसप्राज्ञतुर्यभेदेन ।

## भाष्यार्थरत्नावलिः

ननु "सर्वंह्येतद् ब्रह्मे"ति वाक्य"मिदं सर्वं" "सर्वमोंकार एवे"ति वाक्याभ्यां पुनरुक्तमिनि प्रतीतिं निवारयन् हिशब्दसूचितप्रमाणमुदाहृत्य तात्पर्यकथनपूर्वमवतारयति ।। **परमिति** ।। अपौरषेयत्वेनास्मदुक्तमेवालं न प्रमाणान्तरमपेक्षणीयम् । तथापि संवादायोक्तं हीति सूचयितुं इत्यादिषुच प्रसिद्धमित्युक्तं । यद्वा चोऽवधारणे । ब्रह्मण एवेत्यन्वयः । अत एव "तदेव ब्रह्म परमं कवीनामि"त्युदाहृतं । नकेवलं मूलरूपिणो विष्णोः पूर्णत्वं किंत्वन्तर्यामिणोऽपीति भावेन प्रवृत्तं "अयमात्माब्रह्मे"ति वाक्यं जीवस्य ब्रह्मात्मकत्वप्रतीतिं निवारयन् व्याकुर्वन्नवतारयति ।। **श्रीब्रह्मेति** ।। श्रीब्रह्मादिसकलदेहानाप्नोतीत्यात्माऽन्तर्यामीत्यर्थमभिप्रेत्योक्तं श्रीब्रह्मादि-सकलदेहेषु स्थित्वेति ।

ननु नैतेषु कश्चिदन्तर्याम्यस्ति । प्रमाणाभावादित्याशंकया अयमात्मेत्य-स्यायं प्रमित आदानादिकर्तेत्यर्थं मत्वा व्याख्यातमादानादीति । जीवानामस्वातन्त्र्यदर्शनात् लिंगाच्छ्रीब्रह्मादिसकलदेहेषु स्थित्वा योयं कश्चिज्जीवविलक्षणः । विषयोपादानतददनकर्ता सोऽपि सएवेति संपूर्णएवेति । दर्शयतीत्यर्थः । अत एव आचार्यैः "पूर्णमदः पूर्णमिदमि"ति वाक्यमुदाहृतं । आत्मशब्दस्योक्तार्थत्वंच "यच्चाप्नोति यदादत्ते यच्चास्ति विषयानि"त्यादि सिद्धं । रमाया नियम्यत्वविवक्षायां जीवकोट्यन्तर्भाव विवक्षया जीवानामित्युक्तं । सर्वमोंकारस्योक्तमर्थं प्रमाणान्तरेण दृढयन् यच्चान्यत् त्रिकालातीतमित्यादीनां उक्तार्थे प्रमाणमाह ।। **पूर्णइति** ।। तुशब्दो विशेषार्थः । निरवधिकपूर्णइत्यर्थः । कदाचन मुक्तावपि प्रकृतिं विना परमात्मनोऽन्यत्कालातीतं च नास्ति नकेवलं परमात्मनोऽन्यन्निरवधिकं पूर्णं नास्तीति चार्थः ।

ननु कालादीनां नित्यत्वात् कथं विष्णोरन्यत् कालातीतं नेत्युच्यत इत्यत आह ।। **कालश्चेति** ।। चशब्दाज्जडप्रकृतिश्च। प्रकृत्यात्मान एवेत्यन्वयः । कालादयः प्रकृत्यात्मानः प्रकृत्यभिमन्यमाना एव न तदभिमानविनिर्मुक्ताः । येन परमात्मचित्प्रकृती इव कालातीताःस्युः ।

कालकृतविक्रियावतामेवान्याभिमतत्वादन्यथा किञ्चित् कुर्वतोऽभिमानस्य व्यर्थत्वादिति भावः । कालप्रवाहस्य प्रवाह्युत्पत्तिरुपः कालकृतविकारः तयोर्भेदाभेदात् आकाशमूर्ति सम्बन्धः। वेदेष्वर्थावबोधकत्वशक्याविर्भावः जडप्रकृतौ किंचित् परिणाम इति शास्त्रे अवगन्तव्यः । जीवानामपि कालातीत्वाभावमुपपादयति ।। **अभिमानादिति** ।। तुशब्दो विशेषार्थः। शरीराभिमानादित्यर्थः तेन रमाया अव्यक्ताभिमानसद्भावात् तस्या अपि कालातीतत्वमिति निरस्तं । यद्वा कालकृतादभिमानादित्यर्थः । रमाभिमानस्तु केवलमीश्वरेच्छयेति नदोषः ।

ननु ब्रह्मणः शरीराभिमानएव नास्ति "ब्रह्मानिरभिमानित्वात्शरीर्यप्यशरीरवान्"इत्युक्तेः भावेऽप्यबन्धकत्वात् कालप्रयुक्तविक्रियाहेतुर्न भवति । अन्यथा अशरीरोक्तिविरोधात् । तस्मात् तस्यापि कालातीतत्वमिति चेन्न। तच्छरीरस्य कालनिर्मितत्वेन तदभिमन्त्रित्वमात्रेण कालातीतत्वाभावोपपत्तेः ननु 'अविकारौ ब्रह्मरुद्रौ देहाभेदादिसम्भवे । विकारवन्त इन्द्राद्याः तस्माद्वैकारिकाः स्मृता"इति तृतीयस्कंधतात्पर्ये ब्रह्मण इव रुद्रस्यापि देहोत्पत्या विकाराभावस्योत्कत्वात् । केवलदेहोत्पत्यैव कालातीतत्वाभाव इत्येतद्रुद्रस्यापि तुल्यमिति चेन्न । देहोप्तत्या चैतन्ये विक्रियाभावेपि कदाचित् देहबंधकाभिमानसद्भावेन तत्कृतविक्रियोत्पादसंभवात् । यथोक्तमेकादशतात्पर्ये । 'रुद्राद्यास्तन्वभीमानात् बहिरर्थयुजस्तथे' ति।

ननु मुक्तानामप्यस्ति कालातीतता तेषां शरीरस्यैवाभावात् कदाचित्स्वेच्छयोपात्तलीलाविग्रहस्य तत्र च अभिमानस्य सद्भावेपि तयोः कालकृतत्वाभावादित्यत आह ।। **मुक्तानामिति** ।। तथाच न त्रिकालातीतत्वमिति भावः । सर्वंह्येतद्ब्रह्मेत्यत्र प्रमाणं पूर्णत्वं चेति मुक्तानामिति पूर्तिसद्भावात् सदेत्युक्तं । निरवधिकपूर्णत्वंतु न कदाचन कुत्रापीति प्रागेव उक्तं । अयमात्मा ब्रह्मेत्यत्र प्रमाणं सोऽयमिति । हेतुगर्भविशेषणमेतत् । रमाब्रह्मरुद्रानन्तान्तर्यामित्वात् तेषां आदानातदनकतृत्वाच्चात्मनामा सोऽयं विष्णुरन्तर्यामी । सोपि तेषां अगोचरोऽतः पूर्णमित्यर्थः । एवमधिदैवमध्यात्मं भगवतः प्रणवर्थातया पूर्णत्वमभिधाय तदंशानामपि

तृतीयोपक्रमे अधिमात्रमित्यत्र "येंशातस्यतु सर्वेपि पूर्णाः प्रत्येकशो। विभो"रिति पूर्णत्वं वक्तुं अन्तर्यामिरूपाणि नामरूपाधिष्टानवस्थाभोगकार्यैः विभागेनोच्यन्ते ।। **सोयमात्मेति** ।। योऽयमात्मान्तर्यामी स चतुष्पात् चतूरूप इति ।

## पदार्थदीपिका

नन्विदं सर्वमित्युक्तत्वात् सर्वंह्येतद्ब्रह्मेति पुनरुक्तमित्याशंकापरिहाराय हिशब्दसूचितप्रमाणोदाहरणपूर्वकमवतारयति ।। **परममित्यादिना** ।। वृद्ध्यर्थकबृहधातुनिष्पन्नस्य ब्रह्मशब्दस्य पूर्णत्वार्थकत्वादिति ध्येयं । तथाचैतद्ब्रह्मोंकारप्रतिपाद्यमक्षराख्यं परं ब्रह्म सर्वं पूर्णमित्येतत् हि पूर्णमद इत्यादि श्रुतिप्रसिद्धमिति योजनोक्ता भवतीति द्रष्टव्यं । अयमात्मा ब्रह्मेति वाक्यं जीवस्य ब्रह्मात्मकत्वप्रतिपादनपरमिति प्रतीतिनिरासाय व्याकुर्वन्नेवावतारयति ।। **श्रीब्रह्मादीत्यादिना** ।। आदानादिकर्तेत्यात्मशब्दार्थकथनं । आदिपदेनादनकर्तृत्वग्रहणं प्रतीयते । अनुमानेन तत्र दृष्टांतमाह ।। **जीवानामिति** ।। अस्मदादीनामित्यर्थः । हिताकरणाहितकरणाभ्यां जीवानामस्वातंत्र्यदर्शनादितिभावः । तथाच श्रीब्रह्माद्याः स्वादानादिकर्तृसापेक्षाः अस्वतंत्रत्वादस्मदादिवदित्यनुमानेन श्रीब्रह्माद्यादानादनकर्तुः कस्यचित्सिद्धत्वःत्तस्यापि पूर्णत्वत्रिकालातीतत्वयोः संभवेनातिव्याप्तिप्रसंगादोंकार एवेत्यवधारणमयुक्तमित्याशंकापरिहाराय यः श्रीब्रह्माद्यादानादिकर्ताऽनुमानेन सिद्धः सोऽप्योंकारवाच्याक्षरनामको भगवानेव नान्यः । अतः पूर्णत्वादि तस्यैव नान्यस्येति दर्शयत्ययमात्मा ब्रह्मेतिवाक्येनेत्यर्थः ।

सर्वमोंकार एवेत्यादिवाक्यचतुष्टयं सर्वमोंकार एवेत्यन्यस्येत्यादिना स्ववाक्येन व्याख्याय प्रमाणेनापि व्याख्याति ।। **पूर्णस्त्वित्यादिना** ।। प्रकृतिं विना परमात्मानोऽन्यत्त्रिकालातीतं नेत्युक्त्याऽन्यदिति विशेषणं प्रकृतिव्यावृत्त्यर्थमित्युक्तं समर्थितं भवति । ननु तथापि प्रकृत्यन्यत्वे सति कालत्रयकृतविकारशून्यत्वापरपर्यायकालत्रयातीतत्वं न ब्रह्मणएव संभवति काले दिक्षु वेदेषु चातिव्याप्तेरित्यत आह ।। **कालश्चैवेति** ।। प्रकृत्यात्मान एवेति संबंधः । अत्रकालशब्देन तत्प्रवाह उच्यते । तस्यैव कालत्रयेप्येक-

प्रकारकत्वात्। प्रवाहिणां निमेषादीनां च "सर्वेनिमेषा जज्ञिर"इति कालकृत विकारश्रवणात् । यथोक्तं "कालप्रवाह एवैको नित्यो नतुविशेषवानिति" । अव्याकृताकाशभागाः दिश उच्यंते । वेदा इति पंचाशद्वर्णागृह्यंते । क्रमविशेषविशिष्टवर्णानां वेदशब्दवाच्यानां जन्यत्वेन विकारित्वादिति द्रष्टव्यं । प्रकृत्यात्मानः चेतनप्रकृत्यभिमन्यमानाः । तथा च प्रकृत्यन्यत्व-विशेषणेनैव तदन्यत्वमप्युक्तप्रायमेवेत्याशयः ।

जीवस्वरूपेऽप्यतिव्याप्तिमाशंक्य परिहरतिं ।। **अभिमानादिति** ।। देहाभिमानकृतोच्चनीचत्वादिविकारसद्भावादिति भावः । मुक्तेष्वतिव्याप्ति-माशंक्य परिहरति ।। **मुक्तानामिति** ।। पूर्वत्र संसारावस्थायां । तथाच पूर्वकालकृतविकारसद्भावेन कालत्रयकृतविकारशून्यत्वं नास्तीति नातिव्या-प्तिरितिभावः । सर्वंह्येतद्ब्रह्मेत्येतव्द्याचष्टे ।। **पूर्णत्वंचेति** ।। प्रसिद्धमिति हिशब्दार्थः । अयमात्मा ब्रह्मेत्येतव्द्याकरोति ।। **सोयमिति** ।। अनुपलब्धि-बाधपरिहारायागोचर इत्युक्तं । गवां ज्ञानानां चरो विषयोन भवतीत्यगोचरइत्यर्थः । तथाच योग्यानुपलब्धिर्नास्तीति भावः । सोयम-स्माकमगोचरो विष्णुः रमादिगः सन् तेषां रमादीनामादानात् तथाऽदनकर्तृत्वात् आत्मेत्युच्यत इति योजना । श्रुतिं सर्वमोंकारएवेत्यादि-रूपां। अस्य वाक्यस्य खिलाखिलपारिजातभेदभिन्नहरिवंशत्रयगतत्वसूचनाय हरिवंशेष्विति बहुवचनं द्रष्टव्यं। एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमभि-धायेदानींप्रणवांशाकारोकारमकारनादप्रतिपाद्यानां विश्वतैजसप्राज्ञतुरीयाणा-मुपास्तिं अकारः प्रथमामात्रा उकारो द्वितीयामात्रा मकारस्तृतीयामात्रा अमात्रश्चतुर्थ इत्यत्र वक्तुमादौ प्रस्तावयति।। **सोयमात्माचतुष्पादिति** ।।

## उपनिषत्

**जागरितस्थानो बहिःप्रज्ञः। सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ।।**

## भाष्यम्

**'चतुर्धाऽवस्थितो देहे परमात्मा सनातनः ।**
**वैश्वानरो जागरितस्थानगो गजवक्त्रकः ।।**

निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः ।
अष्टादशमुखान्यस्य पुमाकाराणि सर्वशः ।।

मध्यमं तु गजाकारं चतुर्बाहुः परः पुमान् ।
पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः ।
स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते नचाशुभान् ।।

विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः ।
तत्सम्बन्धी नरोऽनाशाद् वैश्वानर उदाहृतः ।।

विनायकस्तु विश्वस्य ध्यानादैद् गजवक्त्रताम् ।
तथैव तैजसध्यानात् त्रिध्यानादिन्द्र इन्द्रताम् ।।

चतुर्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्दनात् ।
एवम्भूतगुणो विष्णुश्चतुरात्मा परात् परः ।।' इति महायोगे ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - केते चत्वारः पादाः कानि च तेषां स्थानानि कश्च व्यापारः किंविधं च रूपं किंच भोग्यमित्यतो विश्वादीनां त्रयाणां पृष्टं सर्वमाह ।। **जागरितस्थान इत्यादिना** ।।

**भाष्यार्थः** - सोयमात्मा जीवश्चतुष्पात् कथमित्याकांक्षायां जागरितस्थान इत्याद्युच्यत इत्यन्यथाप्रतीतिं निवारयन् सोऽयमात्मा चतुष्पादित्यादि यथावद्व्याचष्टे ।। **चतुर्धेत्यादिना** ।। बहिर्बाह्यं प्रज्ञापयतीति बहिःप्रज्ञ इत्यस्यार्थो निर्माता बाह्यसंवित्तेरिति । गजवक्त्रक इत्युक्तं. तत्र विशेषमाह ।। **स्थूलानिति** ।। अग्निर्वैश्वानरोवह्निरित्यग्निपर्यायत्वप्रतीतिं निवारयंस्तत्पदं निर्वक्ति ।। **विश्वमिति** ।। विश्यते प्रविश्यते गम्यत इति यावत् यतोऽतः। सर्वगम्यत्वहेतुतः सर्वैर्ज्ञायमानत्वात् स्थूलं विश्वं समुद्दिष्टं तत्संबंधात् वैश्व इति शेषः । स एव नरीयते नक्षीयते यतोऽसावनाशान्नर इति वैश्वानर इत्यर्थः । विनायकेत्यादिना तु मूलाभिप्रेतं चतुर्णां माहात्म्यमुच्यते।

## गूढकर्तृका टीकाटिप्पणी

।। **केतेचत्वारः पादा इति** ।।" किंनामानस्ते चत्वारोंऽशा इत्यर्थः । केच ते प्रथमादय इति प्रश्नान्तरं ग्राह्यम् । उत्तरवाक्ये प्रतिवचनदर्शनात् । ।। **जागरितस्थानइतीति** ।। यत्र स्थिते सति जीवो जागर्ति तद्दाक्षिणाक्षिमुखं जागरितम् । अधिकरणे क्तप्रत्ययः । तदेव स्थानं यस्य सः जागरितस्थानः । दक्षिणाक्षिमुखस्थान इत्यर्थः । "बहिःप्रज्ञः" बहिशब्दोबाह्यार्थपरः । बाह्यानर्थान् प्रज्ञापयतीति बहिःप्रज्ञः । सप्ताङ्गः द्वौ पादौ चत्वारो हस्ता गजमुखत्वाच्छुण्डेत्युपनामा गजहस्त एक इति सप्त अङ्गानि यस्यस तथा । एकोनविंशतिमुखः पुरषाकाराण्यष्टादशमुखानि, मध्यमुखं गजाकारमेवमेकोनविंशतिमुखः । स्थूलाञ्छुभानेव भोगान् भुङ्क्त इति स्थूलभुक् । "वैश्वानरः" विशतिरत्र गतिविशेषवाचको ज्ञानार्थः । विश्यते गम्यते सर्वैर्ज्ञायत इति विश्वं सथूलं भोग्यम् । भोक्तृतया तत्सम्बन्धित्वाद्वैश्वः । स एव आ सर्वथा नरीयते नक्षीयत इति आनरः । चतुर्विधनाशरहित इत्यर्थः । वैश्वश्चासौ आनरश्चेति वैश्वानरो विश्वनामा प्रथमः पादोऽक्षरस्य प्रथमोंऽश इत्यर्थः । नरेच संज्ञायामिति सूत्रेण विश्वशब्दस्य दीर्घे वैश्वानर इति रूपमित्यप्याहुः ।

## प्रकाशिका

'निर्माता बाह्यसंवित्तेः' इति वदता बहिःप्रज्ञशब्दस्य बहिः प्रकर्षेण ज्ञापयतीति णिजन्तव्युत्पत्तिर्दर्शिता । यथाश्रुतार्थकल्पने "एष सर्वज्ञः" इति वक्ष्यमाणश्रुतिविरोधः । अत एव जीव एव विश्व इति मतं निरस्तम् । ओङ्कारप्रतिपाद्यवस्तुकथनावसरे ओङ्कारजप्तृजीवकथनस्यानवसर दुःस्थत्वात् । 'स्थूलान् भोगानिन्द्रियैः सः' इत्यत्र स्थूलान् भोगान् स्वप्ने दृश्यमानवासनामयस्त्रक्चंदनवनितादिसूक्ष्मविषयभोगेभ्यः स्थूलान् स्त्रक्चन्दनवस्त्रवनितादिविषयभोगान् । बहुकालस्थायित्वादिना भोगानामपि स्थौल्यमिति भावः । तत्र तन्नामैव प्रमाणमिति सूचयन् वैश्वानरशब्दं निर्वक्ति - विश्वमिति।। 'श्विगतिवृद्ध्योः' इति धातोः विशेषेण स्वं गतिरिव गतिर्यस्य तद्विश्वमित्यर्थः । स्वाप्नपदार्था एकैकद्रष्ट्रैव दृश्यन्ते । जाग्रत्प-

दार्थजालं तु सर्वैरपि दृश्यत इति भावः । तत्प्रदर्शकत्वेन तत्सम्बन्धित्वात् भगवान् वैश्वः । न रीयत इति नरः । वैश्वश्चासौ नरश्चेति समासः । दीर्घस्तु मित्रावरुणावितिवज्ज्ञेयः । जाग्रत्प्रवर्तकत्वेन जीवदेहगतस्य परमात्मनो नाशशंकावारणाय नरपदमित्यनुसन्धेयम् । इण् गताविति धातोः लङि ऐदिति रूपं भवति। अत ऐद्गजवक्त्रतामित्युक्तम् । तथैव तैजसध्यानादिति वदता तैजसस्यापि विश्ववदेकोनविंशतिमुखत्वमिति सूचितम् ।

## भाष्यविवृतिः

जागरितस्थानः । जागर्त्यत्रेति जागरितं अधिकरणे क्तः जाग्रदवस्था तत्स्थानं यस्य स तथोक्तः । बहिः प्रज्ञायतीति बहिःप्रज्ञः । एकोनविंशतिमुखः मध्यममुखं गजाकारं अन्यानि पुमाकाराणि च । चत्वारो हस्ताः पादौ हस्तिकरश्चेति सप्ताङ्गः । स्थूलभुक् इन्द्रियैः शुभस्थूलभोक्ता । वैश्वनरः विशः प्रजाः तैर्वायत इति विश्वं स्थूलं । घञर्थे कविधानमिति कर्मणि क्तः । भोक्तृत्वेन तत्सम्बंधी वैश्वः सचासौ नरश्च । नरीयत इति नरः । प्रथम पादः पूर्वोऽशः ।

## भाष्यार्थरत्नावलिः

उक्तं रूपचतुष्टयं विविच्योच्वते । **जागरितस्थान इत्यादिना** ।। यत्र स्थित्वा जाग्रदवस्थां प्रवर्तयति । तद् दक्षिणाक्षि जागरितं तच्च तत्स्थानं अधिष्टानं यस्य स जागरितस्थानः। यद्वा जागरिताख्यं स्थानं अवस्था यस्य स जागरितस्थानो जागृदवस्थाधिपतिरित्यवस्थाधिष्ठानयोरुक्तिः । बहिः स्थितान् जाग्रदर्थान् प्रज्ञापयतीति बहिःप्रज्ञ इति । कार्यस्य सप्तांग एकोनविंशतिमुखमितिरूपस्य स्थूलान् प्रथिव्यादिबाह्योपादानकान् जीवेन्द्रियगोचरान्वा विषयान् जीवेन्द्रियाधिष्ठितैः स्वेन्द्रियैः भुंक्तेइति स्थूलभुगिति भोगस्य वैश्वानर इति न अन्य इति विवेकः । स्वप्नस्थानः यत्र स्थित्वा स्वप्नावस्थां नियामयति तन्मनः स्वप्नः तदेव स्थानमधिष्ठानं यस्य स स्वप्नस्थानः । स्वप्नाख्यं स्थानमवस्था यस्य स इति वा अन्तरवासनामयानर्थान् प्रज्ञापयति इत्यन्तःप्रज्ञः । अयमपि सप्तांग एकोनविंशतिमुखः वाह्येभ्यः प्रकर्षेण विविक्तं वासनोपादानकं भुंक्त इति प्रविविक्तभुक् ।

तैजसनामा यत्र हृदये सुप्तः सुखरूपं हरिं प्राप्तः किंचन किमपि कामं काम्यं नकामयते कञ्चनार्थं जाग्रत्पदार्थं स्वप्नंच नपश्यति तद्हृदयं सुषुप्तं तत्स्थानमधिष्टानं यस्य स सुषुप्तस्थानः। यद्वा यत्र येन तमसा सुप्तः सुप्त उपरतेन्द्रियः नकिञ्चन कामं कामयते नकञ्चन स्वप्नं नपश्यति तत्तमः अविद्याख्यं सुषुप्तं तदेव स्थानमवस्था यस्य स सुषुप्तस्थानः । अविद्याकार्यप्रचुरसुप्त्यवस्थानियामकेत्यर्थः ।

ननु बाह्यांतरज्ञानप्रवर्तकयोः विश्वतैजसयोः सतोः कथं तमःप्रचुरा इयमवस्थेत्यत उक्तं ।। **एकीभूतइति** ।। विश्वतैजसाभ्यां संश्लिष्ट इत्यर्थः। तत्कार्यमुक्तं प्रज्ञानघन एवेति । घनेन मेघवदावरकेन तमसा निबिडस्य जीवस्य कालस्य वा विषयं प्रज्ञानं येन स प्रज्ञानघनः। एवशब्दोऽनभिमतव्यावर्तकः। यद्वक्ष्यति नात्मानं नपरांश्चेति। तस्य भोग्यमुक्तमानंदभुगिति । सुप्तौ जीवस्य प्राज्ञप्रवेशेन व्यक्तं स्वरूपभूतमानंदं भुङ्क्तइत्यानंदभुगित्यर्थः। भोगस्यानंदार्थत्वात् । भोगात् प्रागानंदाभावशंका व्यवच्छेदायोक्तमेवानंदमय इति । पूर्णानंद एव सन्नानंदभुगित्यर्थः । जैवानन्दभोगस्य कादाचित्कत्वोक्त्या प्राग्ज्ञानं मेति प्रतीयते । अत उक्तं ।। **चेतोमुख इति** ।। चेतसा ज्ञानेन मुखः प्रधानः । पूर्णज्ञान इति । यद्वा निराकारत्वे भोगायोगः । साकारत्वेऽनित्यत्वमित्यत इदमुक्तं ज्ञानात्मकमुख इत्यर्थः । प्रधानावयवपरत्वान्मुखशब्दः समग्रदेहोपलक्षणः । एतेनैतदपि निरस्तं । विश्वादिवत् रूपानुक्तेः न्यूनतेति । प्राज्ञस्य बिंबत्वेन तत्तदाकारसदृशाकारत्वाद्विश्वादिवद्व्यवस्थिताकारानुक्तिः । चेतनं प्रति बिंबत्वेन चैतन्यात्मकसर्वदेहवत्वमात्रं तूक्तमेवेति । तस्य नामोक्तं प्राज्ञ इति ।

एवं विश्वादीनां महिमानं निरूप्य नांतःप्रज्ञ इत्यादिना तुरीयस्य विवक्षुः चतुर्णां महिमानं युगपदाह ।। **एष सर्वेश्वर इति** ।। य एषोऽन्तर्यामी चतूरूप उपक्रांत एष इत्यर्थः । सर्वयोनित्वे हेतुः प्रभवाप्ययाविति । भूतानां प्रभवाप्ययौहि प्रसिद्धौ । नचतौ कर्तारमंतरेणोपपद्येते इति भावः । सोऽयमात्मा चतुष्पादित्याद्युक्तापव्याख्यानिरासाय प्रमाणेन व्याचष्टे ।। **चतुर्धेति** ।। यः परमात्मा सनातनो नित्य ओमित्येतदक्षरमित्युपक्रांतः

स एव चतुर्धा व्यवस्थित इत्यर्थः । अत एव सोऽयमिति परामर्श इति भावः । जागरितस्थान इत्यादि व्याचष्टे ।। **वैश्वानर इति** ।। जागरित-स्थानं दक्षिणाक्षि गच्छत्यतिगच्छतीतिवा । जागरितावस्थानं स्वामित्वेनाधि-गच्छतीति वा जागरितस्थानगः । उपनिषद्भाष्ययोः जागरितादिशब्देन दक्षिणाक्ष्यधिष्ठानस्याविवक्षितत्वे दक्षिणाक्षिमुखे विश्व इत्यादि प्रमाणोदाहर-णमसंगतं स्यात् प्रमाणप्रमेययोरेकरूपस्यावश्यकत्वात् । अवस्थाया अविवक्षितत्वे सुषुप्तं तु तमोज्ञेयमित्याद्युक्त्वा तस्य स्थानस्य पतिः प्राज्ञ इत्यागामिभाष्यविरोधः। तत्र सुषुप्तशब्देन तमःप्रचुरावस्थायाः गृहीतत्वात्। वैश्वानरोग्निरिति भ्रमं वारयितुमुक्तं गजवक्त्रक इति । बहिःप्रज्ञ इत्यस्य बहिरर्थान् प्रज्ञापयतीति तद्विषयज्ञानं जननयतीत्यर्थमभिप्रेत्याह ।। **निर्मा-तेति** ।। बाह्यमवसानमयं तद्विषयसंवित्तेरित्यर्थः अन्यथा सुखादिज्ञानं विश्वकार्यं न स्यात् इति ज्ञेयम् । समाध्यपरनामिकायां तुर्यावस्थायां जीवेन परोक्षीक्रियत इति वक्ष्यते । विश्वोपि स्वावस्थायां किं जीवब्रह्मप्रत्यक्ष-विषयः । नेत्याह ।। **तदगोचर इति** ।। गजवक्त्रक इत्युक्त्या प्राप्तमेकोनविंशतिमुखानां गजमुखाकारत्वं प्रतिषेधति अष्टेति । मध्यमं तु मध्यममेव ।

ननु श्रुत्युक्तो वैश्वानरोग्निरेव सप्तांग इति । सप्तहस्तत्वश्रवणात् सप्तहस्तासो अस्येति समाख्यानादित्यत आह ।। **चतुर्बाहुरिति** ।। किं तर्हि सप्तांगत्वमित्यत आह ।। **पादाविति** ।। स्थूलान् पचतीति स्थूल-भुक् । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्रणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति वचनादित्यन्यथाप्रतीतेर्व्याचष्टे ।। **स्थूलानिति** ।। स्थूलान् वासनामयान् । बाह्यवन्नते स्थूला इत्यनुव्याख्याने वासनामयानां स्थूलशब्दार्थस्य उक्तत्वात् । इन्द्रियैः जीवेन्द्रियाधिष्ठितैः स्वेन्द्रियैः विष्णोर्भोगांगीकारेऽनश्नन्नन्य इत्यादि श्रुतिविरोध इत्यत उक्तं शुभानिति । अशुभानशनपरा श्रुतिरिति भावः ।

ननु विश्वस्य शुभस्थूलभोगोनाम किं बाह्यस्यान्नादेर्मध्यस्य जीवेन्द्रियगोच-रस्य उत तद्गतस्य जीवेन्द्रियागोचरस्य स्वमात्रभोग्यसारस्य भोगः । नाद्यः

तैजसनामा यत्र हृदये सुप्तः सुखरूपं हरिं प्राप्तः किंचन किमपि कामं काम्यं नकामयते कञ्चनार्थं जाग्रत्पदार्थं स्वप्नंच नपश्यति तद्हृदयं सुषुप्तं तत्स्थानमधिष्टानं यस्य स सुषुप्तस्थानः। यद्वा यत्र येन तमसा सुप्तः सुप्त उपरतेन्द्रियः नकिञ्चन कामं कामयते नकञ्चन स्वप्नं नपश्यति तत्तमः अविद्याख्यं सुषुप्तं तदेव स्थानमवस्था यस्य स सुषुप्तस्थानः । अविद्याकार्यप्रचुरसुप्त्यवस्थानियामकेत्यर्थः ।

ननु बाह्यांतरज्ञानप्रवर्तकयोः विश्वतैजसयोः सतोः कथं तमःप्रचुरा इयमवस्थेत्यत उक्तं ।। **एकीभूतइति** ।। विश्वतैजसाभ्यां संश्लिष्ट इत्यर्थः। तत्कार्यमुक्तं प्रज्ञानघन एवेति । घनेन मेघवदावरकेन तमसा निबिडस्य जीवस्य कालस्य वा विषयं प्रज्ञानं येन स प्रज्ञानघनः। एवशब्दोऽनभिमत-व्यावर्तकः। यद्वक्ष्यति नात्मानं नपरांश्चेति। तस्य भोग्यमुक्तमानंदभुगिति । सुप्तौ जीवस्य प्राज्ञप्रवेशेन व्यक्तं स्वरूपभूतमानंदं भुङ्क्तइत्यानंदभुगित्यर्थः। भोगस्यानंदार्थत्वात् । भोगात् प्रागानंदाभावशंका व्यवच्छेदायोक्तमेवानंदमय इति । पूर्णानंद एव सन्नानंदभुगित्यर्थः । जैवानन्दभोगस्य कादाचित्क-त्वोक्त्या प्राग्ज्ञानं मेति प्रतीयते । अत उक्तं ।। **चेतोमुख इति** ।। चेतसा ज्ञानेन मुखः प्रधानः । पूर्णज्ञान इति । यद्वा निराकारत्वे भोगायोगः । साकारत्वेऽनित्यत्वमित्यत इदमुक्तं ज्ञानात्मकमुख इत्यर्थः । प्रधानावयव-परत्वान्मुखशब्दः समग्रदेहोपलक्षणः । एतेनैतदपि निरस्तं । विश्वादिवत् रूपानुक्तेः न्यूनतेति । प्राज्ञस्थ बिंबत्वेन तत्तदाकारसदृशाकारत्वाद्विश्वादिव-द्व्यवस्थिताकारानुक्तिः । चेतनं प्रति बिंबत्वेन चैतन्यात्मकसर्वदेहवत्त्वमात्रं तूक्तमेवेति । तस्य नामोक्तं प्राज्ञ इति ।

एवं विश्वादीनां महिमानं निरूप्य नांतःप्रज्ञ इत्यादिना तुरीयस्य विवक्षुः चतुर्णां महिमानं युगपदाह ।। **एष सर्वेश्वर इति** ।। य एषोऽन्तर्यामी चतूरूप उपक्रांत एष इत्यर्थः । सर्वयोनित्वे हेतुः प्रभवाप्ययाविति । भूतानां प्रभवाप्ययौहि प्रसिद्धौ । नचतौ कर्तारमंतरेणोपपद्येते इति भावः । सोऽयमात्मा चतुष्पादित्याद्युक्तापव्याख्यानिरासाय प्रमाणेन व्याचष्टे ।। **चतुर्धेति** ।। यः परमात्मा सनातनो नित्य ओमित्येतदक्षरमित्युपक्रांतः

स एव चतुर्धा व्यवस्थित इत्यर्थः । अत एव सोऽयमिति परामर्श इति भावः । जागरितस्थान इत्यादि व्याचष्टे ।। **वैश्वानर इति** ।। जागरित-स्थानं दक्षिणाक्षि गच्छत्यतिगच्छतीतिवा । जागरितावस्थानं स्वामित्वेनाधि-गच्छतीति वा जागरितस्थानगः । उपनिषद्भाष्ययोः जागरितादिशब्देन दक्षिणाक्ष्यधिष्ठानस्याविवक्षितत्वे दक्षिणाक्षिमुखे विश्व इत्यादि प्रमाणोदाहर-णमसंगतं स्यात् प्रमाणप्रमेययोरेकरूपस्यावश्यकत्वात् । अवस्थाया अविवक्षितत्वे सुषुप्तं तु तमोज्ञेयमित्याद्युक्त्वा तस्य स्थानस्य पतिः प्राज्ञ इत्यागामिभाष्यविरोधः। तत्र सुषुप्तशब्देन तमःप्रचुरावस्थायाः गृहीतत्वात्। वैश्वानरोग्निरिति भ्रमं वारयितुमुक्तं गजवक्त्रक इति । बहिःप्रज्ञ इत्यस्य बहिरर्थान् प्रज्ञापयतीति तद्विषयज्ञानं जननयतीत्यर्थमभिप्रेत्याह ।। **निर्मा-तेति** ।। बाह्यमवसानमयं तद्विषयसंवित्तेरित्यर्थः अन्यथा सुखादिज्ञानं विश्वकार्यं न स्यात् इति ज्ञेयम् । समाध्यपरनामिकायां तुर्यावस्थायां जीवेन परोक्षीक्रियत इति वक्ष्यते । विश्वोपि स्वावस्थायां किं जीवब्रह्मप्रत्यक्ष-विषयः । नेत्याह ।। **तदगोचर इति** ।। गजवक्त्रक इत्युक्त्या प्राप्तमेकोनविंशतिमुखानां गजमुखाकारत्वं प्रतिषेधति अष्टेति । मध्यमं तु मध्यममेव ।

ननु श्रुत्युक्तो वैश्वानरोग्निरेव सप्तांग इति । सप्तहस्तत्वश्रवणात् सप्तहस्तासो अस्येति समाख्यानादित्यत आह ।। **चतुर्बाहुरिति** ।। किं तर्हि सप्तांगत्वमित्यत आह ।। **पादाविति** ।। स्थूलान् पचतीति स्थूल-भुक् । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्रणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति वचनादित्यन्यथाप्रतीतेर्व्याचष्टे ।। **स्थूलानिति** ।। स्थूलान् वासनामयान् । बाह्यवन्नते स्थूला इत्यनुव्याख्याने वासनामयानां स्थूलशब्दार्थस्य उक्तत्वात् । इन्द्रियैः जीवेन्द्रियाधिष्टितैः स्वेन्द्रियैः विष्णोर्भोगांगीकारेऽनश्नन्नन्य इत्यादि श्रुतिविरोध इत्यत उक्तं शुभानिति । अशुभानशनपरा श्रुतिरिति भावः ।

ननु विश्वस्य शुभस्थूलभोगोनाम किं बाह्यस्यान्नादेर्मध्यस्य जीवेन्द्रियगोच-रस्य उत तद्गतस्य जीवेन्द्रियागोचरस्य स्वमात्रभोग्यसारस्य भोगः । नाद्यः

स्थूलानशनोक्तेः । आह च "सूक्ष्माशनं प्रविविक्ताहारतर इव भवत्यस्मा-च्छरीरादात्मन"इति गीताभाष्यविरोधात् । गन्धादिषु यो जीवेन्द्रियागोचरः सारभागस्तस्य भोग इति तट्टीकाविरोधाच्च। अवतारे स्थूलमपि भुंक्त इति स्थूलभोगस्यावतारमात्रनिष्ठत्वोक्तिविरोधाच्च । नापि द्वितीयः । अत्र स्थूलान्भोगानिन्द्रियैः अपि जीवेन्द्रियाधिष्ठितस्वेन्द्रियैर्भोगोक्त्या जीवभोग्य-भोगस्य प्राप्तत्वात् । "जीवभोग्यस्य भोक्तेशो जीवस्तद्भोगभुगि"ति वचनविरोधाच्च। "विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुत"इति सर्वभोग्यतया स्थूलनामकस्य प्रसिद्धस्यैव भोगोक्तेश्चेतिचेन्न । अन्तर्यामिरूपेण स्थूलभोग-स्याङ्गीकारात्। गीताभाष्यवाक्यस्य प्रतिमाद्यान्तर्गतपरत्वात् । तट्टीकायां अवतारशब्देन अन्तर्याम्यवतारस्यापि विवक्षितत्वात्। "तस्यावतारा देहस्था अदेहस्था इति द्विधे"ति दशमस्कन्धतात्पर्य उक्तत्वात् । उपलक्षणया वान्तर्यामिरूपाणां ग्रहणोपपत्तेरिति दिक् । अयमग्निर्वैश्वनर इति निगमबलादग्निपरत्वप्रतीतेर्वैश्वानरशब्दं निर्वक्ति ।। **विश्वमिति** ।। विश्यते प्रविश्यते गम्यत इति विश्वं गम्यत्वं सर्वसाधारणमित्यतः असाधारण्येन व्यपदेशाभवन्तीति सर्वगम्यत्वाद्विश्वं स्थूलं। न पुनः वासनामयमिव प्रतिनियतपुरुषगम्यं, तद्भोक्तृत्वेन तत्प्रदर्शकत्वेनच तत्संबन्धी वैश्वः । आसम्यङ्नरीयते नक्षीयते इत्यानरः । वैश्वश्चासावानरश्चेति वैश्वानर उदाहृतः। प्रथमखंडे सोऽयमात्मा चतुष्पादित्युपक्रम्य रूपत्रयमुक्त्वा द्वितीय-खंडे तुरीयरूपमुक्त्वा सआत्मा सविज्ञेयइति रूपचतुष्टयस्योपास्यत्वमुक्तं । तदुपासकान् यथोपासनं फलंचाह ।। **विनायक इति** ।। विनायको रूप-द्वयानुगतगजवक्तृत्वध्यानाद्गजवक्तृत्वं । इन्द्रो रूपत्रये अवस्थात्रयपतित्व-ध्यानादिन्द्रत्वं लोकेश्वरत्वं । रुद्रस्तु रूपचतुष्टये सर्वाधिपत्यादिध्यानात् इन्द्रादपि महत्वं, प्रपञ्चोपशमत्वादिध्यानात् जगत्संहारकत्वापरपर्याय वाच्यरुद्रत्वं चापेति भावः । रुद्रोरौद्रइति क्रौर्योक्त्या संहारकत्वप्रतीतेः । एवं भूतगुण इति ध्यानात् तत्पदादिप्रदत्वलक्षणगुणइत्यर्थः ।

## पदार्थदीपिका

तत्र सोयमात्मा जीवश्चतुष्पादिति अन्यथाप्रतीतिनिरासाय प्रमाणेनैतव्द्याचष्टे ।। **चतुर्धेति** ।। देह इति श्रुतौ शेषोक्तिः । ननु के ते चत्वारः पादाः कानि च तेषां स्थानानि कश्चव्यापारः किंविधंचरूपं किंचभोग्यमित्यतो विश्वतैजसप्राज्ञानां स्थानादीनि वक्तुं जागरितस्थान इत्यादिकोपनिषत् प्रवृत्ता । तत्र विश्वस्य स्थानादिप्रतिपादनपरं जागरितस्थान इत्यादिप्रथमः पाद इत्यंतं वाक्यमप्रतीत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे ।। **वैश्वानरइत्यादिना** ।। जागरितस्थानगः दक्षिणाक्षिरूपजागरितस्थानस्थित इत्यर्थः । दक्षिणाक्षिमुखे विश्व इति वक्ष्यमाणत्वात् । वैश्वानरस्य रूपविशेषं आह ।। **गजेति** ।। बहिः प्रज्ञ इत्यस्य बहिष्ठं वस्तु प्रज्ञापयतीति तथोक्त इत्यभिप्रेत्य आह ।। **निर्मातेति** ।। जीवानां बाह्यसंवित्तेः बाह्यपदार्थविषयकज्ञानस्येत्यर्थः । अत्राप्यनुपलब्धिपरिहाराय तदगोचर इत्युक्तं । गजवक्त्रक इत्युक्तं तत्र विशेषं वक्तुं प्रवृत्तं एकोनविंशतिमुख इत्येतत् । तद्विवृणोति ।। **अष्टादशेति** ।। अस्य वैश्वानरस्य मध्यममित्यनंतरं बुध्या विवेकेन वचनविपरिणामेन मुखमित्यनुवर्तते । सप्तांग इत्यस्यार्थमाह ।। **पादाविति** ।। द्वौ पादौ हस्तिनो गजस्य करः पुरोभागी शुंड एकः हस्ताश्चत्वारोबाहवः । स्थूलभुगित्यस्य शुभानशुभांश्च स्थूलान् भोगान् भुंक्त इत्यन्यथाप्रतीतिनिरासार्थमाह ।। **स्थूलानिति** ।।

भुज्यंत इति भोगा विषयाः । इंद्रियैः जीवेंद्रियैः । "श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेवच । अधिष्ठाय मनश्चायं विषयानुपसेवत" इति गीतावचनात् । वैश्वानरशब्दस्य "अग्निर्वैश्वानरो वह्निः" इत्यभिधानबलेन प्रसिद्धाग्निपरत्वप्रतीतिनिरासायार्थमाह ।। **विश्वमिति** ।। कथमित्यत आह ।। **सर्वेति** ।। विश्यते ज्ञानेन प्रविश्यते गम्यत इति यावत्। तथाच सर्वैरपि ज्ञायमानत्वहेतुतः विश्वं स्थूलं समुद्दिष्टं । भोक्तृत्वेन तत्संबंधी भगवान् वैश्वश्चासौ नरश्च वैश्वानर इत्युदाहृतो विश्वाख्यो भगवानित्यर्थः । अत्र वैश्वानर इति भाष्ये दीर्घस्त्वाधिक्यविवक्षया । "संहितायां यत्र दैर्घ्यं पदे यत्र नदृश्यते। उक्तार्थस्यमहाधिक्यं श्रुतेस्तत्रविवक्षित"मिति वचनादित्याहुः।

वस्तुतस्तु नरेसंज्ञायामिति सूत्रेण विश्वशब्दस्य नरशब्दे परे संज्ञायां दीर्घविधानात् वैश्वानर इति युक्तमित्यवगंतव्यं । उपनिषदभिप्रेतानां विश्वादीनां उपासकान् दर्शयति ।। **विनायकस्त्वित्यादिना** ।। विनायको गणपतिः विश्वम्य ध्यानात् गजवत्क्रतां ऐत् । इण्गतौ प्रापेत्यर्थः । तथैव तैजसध्यानाद् गजवत्क्रतामैदिति संबंधः। "तं यथा यथोपासत" इत्यादि श्रुतेरित्यर्थः। त्रिध्यानात् त्रयाणां विश्वतैजसप्राज्ञानां ध्यानात् । चतुर्णां विश्वतैजसप्राज्ञतुरीयाणां ध्यानात् । उपसंहरति ।। **एवंभूतगुणइति** ।। विनायकादीनां गजवत्क्रतादिप्रदगुणोपेत इत्यर्थः ।

## उपनिषत्

**स्वप्नस्थानोऽन्तःप्रज्ञः । सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ।।**

## भाष्यम्

**'जाग्रद्दर्शनसंस्काररूपत्वात् स्वप्नगं तु यत् ।**
**प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यते ।। ' इति वाराहे ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**भाष्यार्थः** - प्रविविक्तभुक्त्वमंतः प्रज्ञत्वं च किमित्यतः तदुभयं दर्शयति ।। **जाग्रदिति** ।। यत्स्वप्नगंतु वस्तु तदांतरं बाह्यार्थाद्विविक्तंच तद्भुंङ्क्ते भोजयति जानाति ज्ञापयति चेति प्रविविक्तभुगंतःप्रज्ञश्चेत्यर्थः ।

## गूढकर्तृका टीकाटिप्पणी

स्वप्नस्थानः यत्र स्थित्वा स्वाप्नपदार्थान् जीवस्य प्रदर्शयति तत् स्वप्नम्। तदेव स्थाने यस्यस तथा । कण्ठदेशस्थान इत्यर्थः । अन्तःप्र ज्ञः अन्तःशब्दोऽत्र वाह्यार्थज्ञानजन्यवासानापरिमाणरूपान्तस्थार्थपरः । अन्तस्थान् पदार्थान् ज्ञापयति जानाति चेति अन्तःप्रज्ञः । सप्ताङ्ग एकोनविंशतिमुख इति पदद्वयं पूर्ववद्व्याख्येयम् । प्रविविक्तभुक् संस्कारोपादानकतया बाह्यार्थेभ्यो विविक्तान् स्वाप्नान् भोग्यान् भुङ्क्ते भोजयति चेति प्रविविक्तभुक् । तैजसः तेजोमयचित्तस्थतया चित्तसम्वन्धित्वेन तैजसनामा अक्षरस्य द्वितीयः पादः ।

## प्रकाशिका

'यत् प्रविविक्त' इत्यत्र प्रकर्षेण विविक्तमेकान्तस्थलस्थितमित्यर्थः । 'विविक्त उपगम्य' 'विविक्तसेवी लघ्वाशी' इत्यादौ प्रयोगदर्शनात् ।

## भाष्यविवृतिः

स्वप्नस्थानः स्वप्नावस्थास्थानः । एकोनविंशतिमुखत्वं सप्ताङ्गत्वं विश्ववत् । प्रविविक्तभुक् जाग्रद्दर्शनजन्यसंस्कारात्मकं प्रविविक्तं तद्भुक् तैजसो द्वितीय पादः ।

## भाष्यार्थरत्नावलिः

प्रविविक्तभुगिति प्रविविक्तपदार्थमाह ।। **जाग्रदिति** ।। तु शब्दद्वयमवधारणे । तदिति व्यस्ततयाऽन्वेति । यत्स्वप्नगं तदेव प्रविविक्तं । कुतः । जाग्रद्दर्शनसंस्कारोपादानकत्वादेव नतु भिन्नत्वस्य सर्वसाधारण्यादिति भावः । अन्तःप्रज्ञ इति व्याचष्टे ।। **तज्ज्ञानेति** ।। तस्य प्रविविक्तस्य ज्ञानं तज्ज्ञानं ।

## पदार्थदीपिका

तैजसस्थानादिप्रतिपादनाय स्वप्नस्थान इत्यारभ्य द्वितीयः पादइत्यंतं वाक्यं प्रवृत्तं । तत्र प्रविविक्तभुक्त्वमंतःप्रज्ञत्वं च कीदृशमित्यतरतदुभयं प्रमाणेन दर्शयति ।। **जाग्रदिति** ।। स्वप्नावस्थागतं यद्वस्तु तत् जाग्रत्कालीनपदार्थानुभवजन्यवासनोपादानकत्वात् प्रविविक्तं । जाग्रददृष्टपदार्थापेक्षयात्यंतविलक्षणं । तज्ज्ञानकारणत्वादंतःप्रज्ञः । प्रविविक्तं बाह्यपदार्थाद्विविक्तं स्वाप्नपदार्थजातं भुंक्ते स्वयं तदनुभवजन्यसारभोगवान् भवति जीवं भोजयति चेति प्रविविक्तभुक् । तादृशपदार्थमंतः देहांतः मनसा करणेन जीवं प्रज्ञापयति स्वयंच जानातीत्यंतःप्रज्ञ इत्यर्थ उक्तो भवतीति ज्ञातव्यं ।

### उपनिषत्

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।।**

## भाष्यम्

'सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः ।
न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना ।।

कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् ।
चित्तस्थो दर्शयेद् तस्मात् तैजसः स्वप्नकृद्धरिः ।।

न बाह्यं ज्ञापयेद् यस्मात् प्राज्ञस्तेन जनार्दनः ।
एकीभावं व्रजेतां च तेन विश्वश्च तैजसः ।।

एकीभूतस्तदा प्राज्ञो घनो जीवस्तमोवृतः ।
तन्मात्रस्य सकालस्य घनप्रज्ञः प्रदर्शनात् ।।"

इति प्रकाशिकायाम् ।

आनन्दमयः पूर्णानन्दः । चेतोमुखः ज्ञानस्वरूपमुखः। प्रज्ञानघन इति विपरीतसमासः घनप्रज्ञ इति वक्ष्यमाणत्वात् । विषयं भोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः । आनन्दमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वेश्वरत्वादिचतुष्टयेऽपि समम् । अन्यत्रातिदेशार्थमेकत्रानन्दमयत्वं चेतोमुखत्वं चोक्तम् ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - सुपुप्तस्थान इत्यादि यत्रेत्यस्मात्प्रथमं योज्यं । कथं भूतं सुपुप्तस्थानमित्यतो लक्षणोक्त्या तन्निरूपयति ।। **यत्रसुप्त इत्यादिना** ।। यत्र यस्यामवस्थायां सुप्तो मनआदींद्रियाणामुपरतत्वादविद्यावृतत्वात्स्वरूपस्य न कंचनकामं कामयते नकंचन स्वप्नं पश्यति तत्सुपुप्तं । बाह्यस्वाप्नार्थादर्शने सति स्वस्वरूपादिदर्शनं यत्र सा सुषुप्तिरित्यर्थः । नकेवलमानंदमयः किंतु आनंदभुक् ।। छ ।।

**भाष्यार्थः** - सुप्त्यवस्थां गतस्य कामराहित्ये दर्शनाभावे च हेतुसूचकं सुपुप्त इतिपदं द्वेधा व्याचष्टे ।। **सुषुप्तमिति** ।। योजनातु सुपुप्तंतु तमोज्ञेयं । तथाच तदावृत्तः सुप्तः सुखरूपत्वात्सुर्हरिः तं प्राप्तः सुप्तः तं प्राप्य नकामयेदित्यादिका । स्थूलं विश्वं समुद्दिष्टं तत्संबंधीच वैश्व इति विश्व-

शव्दनिर्वचनस्य कृतप्रायत्वात्तैजसप्राज्ञशब्दौ निर्वक्ति ।। **चित्तेति** ।। तैजसे चित्ते स्थितः तैजसः तैजसमनोवासनारूपान् दर्शयेदितिवा तैजसः । ईषदपि बाह्यं नज्ञापयतीति प्राज्ञइत्यर्थः । केनैकीभूत इति न ज्ञायतेऽतो व्याकरोति ।। **एकीभावमिति** ।।

प्रज्ञानघनः निबिडज्ञान इति प्रतीतिं निवारयन् व्याचष्टे ।। **घनोजीव इति** ।। आनंदमय इति पदमानंदविकारित्वप्रतीतिं निवारयन् व्याचष्टे ।। **आनंदेति** ।। स्वरूपार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधेति वचनादिति-भावः। चेतोमुख इतिपदं चित्तमुखत्वप्रतीतिं निवारयन् व्याचष्टे।।**चेतइति**।। ननु प्रज्ञानघन इति मूलपाठः । तत्कथं घनप्रज्ञ इति व्याख्यानमित्यत आह ।। **प्रज्ञानेति** ।। कुतएतदवगतमित्यत आह ।। **घनप्रज्ञइति** ।। विश्वतै-जसयोरप्यानंदभुक्त्वात्कथमानंदभुक्प्राज्ञ इति विशेषोक्तिरित्यत आह ।। **विषयेति** ।। एष सर्वेश्वरः इत्याद्युक्तानि विशेषणानि प्रज्ञास्यैवेति प्रतीतिमुक्तविशेषणद्वयपूर्वकं निवारयति ।। **आनंदमयेति** ।। ननु आनंदम-यत्वचेतोमुखत्वविशेषणयोः प्राज्ञनिष्टत्वेनोक्तयोः कथं 'चतुर्णामपि विशेषणत्वमित्यत आह ।। **अन्यत्रेति** ।। नतु निरासार्थमिति वाक्यशेषः ।

## गूढकर्तृका टीकाटिप्पणी

ननु द्वितीयपादनिरूपणानन्तरं तृतीयपादस्य निरूपणीयत्वाद् यत्रेत्या-दिना असङ्गतं किमुच्यत इत्यतो योजयति ।। **सुषुप्तस्थान इत्यादीति** ।। ।। **प्रथममिति** ।। यत्र नकञ्चन कामं कामयत इत्यतःपरं विद्यमानं सुपुप्तस्थान इत्यादितृतीयस्थानप्रतिपादकं वाक्यं यत्रेत्येतस्मात् प्रथमं योज्यमित्यर्थः । यत्रेतिवाक्यमसङ्गतिपरिहारायावतारयति ।। **कथं भूतमिति** ।। **सुप्त इति** । सुप्तिरज्ञानं तदावृतः । हरिं प्राप्येति शेषः । प्राज्ञेनात्मना सम्परिष्वक्त इति श्रुतेः । कञ्चन कमपि काम्यमानमर्थं नकामयते नकञ्चन अर्थं जानातीति शेषः । स्वप्नं स्वाप्नपदार्थं नपश्यति नानुभवति तत् सुषुप्तम् सा सुषुप्त्यवस्थेत्यर्थः ।

ननु सुषुप्तौ स्वस्वरूपादिदर्शनस्य सद्भावादसम्भवीदं लक्षणमित्यत आह ।। **बाह्येति** ।। स्वस्वरूपादिदर्शनमिति । आदिपदेन कालादिकं

ग्राह्यम् । श्रुतौ यत्रसुप्तेति वाक्यमुपलक्षणम् । यत्र जागरितः सर्वं कामं कामयते सर्वं पश्यति तज्जागरितम् । यत्र स्वप्नेतो वासनामयं कामं कामयते सर्वं पश्यति तत्स्वप्नमिति वाक्यद्वयं ग्राह्यम् । अनेन यत्र सर्वेन्द्रियोपरमः सासुषुप्तिः । यत्र सर्वेन्द्रियानुपरमस्तज्जागरितम् । यत्राप्रयत्नेन बाह्येन्द्रियोपरमस्तत् स्वप्नम् इति सुप्त्याद्यवस्थात्रयाणां लक्षणत्रयं सूचितमिति बोध्यम् । उपनिषदि सुषुप्तस्थानः यत्र स्थितेसति बाह्यं किमपि नजानाति तत् सुषुप्तम् । तत्स्थानं यस्य सतथा हृत्कर्णिकाग्रस्थित इत्यर्थः ।

एकीभूतः सुषुप्तौ स्वव्यापाराभावेन विश्वतैजसाभ्यां संश्लेषलक्षणैकीभावं प्राप्तः । प्रज्ञानघनः उत्तरत्र अत्रैते श्लोका भवन्तीत्यत्र "बहिःप्रज्ञो विभुर्विश्वोह्यन्तः प्रज्ञस्तुतैजसः । घनप्रज्ञस्तथा प्राज्ञ" इति वक्ष्यमाणत्वात् प्रज्ञानघन इति विपरीतसमासो बोध्यः । एवंच प्रपूर्वाद् अन्तर्णीतण्यर्थाद् ज्ञाधातोः कृत्यल्युटो बहुलमिति बहुलग्रहणात् कर्तरिलुटि अनादेशे घनं अज्ञानादिसहितं जीवं प्रज्ञापयतीति प्रज्ञानघनः घनप्रज्ञ इत्यर्थः । अन्तर्णीतण्यर्थादुक्तादेव धातोर्बहुलग्रहणात् कर्मणि ल्युटि प्रज्ञानः प्रज्ञापितो घनो जीवो येनसः प्रज्ञानघन इति विग्रह इत्यप्याहुः ।

आनन्दमयः पूर्णानन्दः । आनन्दभुक् विषयभोगं विनैवानंदं भुङ्क्ते भोजयतिचेति आनन्दभुक् । विश्वतैजसयोरानन्दभुक्त्वेऽपि स्थूलादिविषयभोगं विना आनन्दभुक्त्वाद् आनन्दभुक् प्राज्ञ इति विशेषोक्तिर्युज्यत इति भावः। चेतोमुखः ज्ञानस्वरूमुखः। उपलक्षणमेतत् । ज्ञानस्वरूपसर्वावयव इत्यर्थः । प्राज्ञः जीवस्वरूपादिकमन्तरा वाह्यं स्वप्नंवा किमपि नप्रज्ञापयतीति प्राज्ञनामा विष्णोस्तृतीयः पादः ।

नन्वानन्दमय इत्यनेनैवान्दभोगस्य लाभात् पुनः श्रुतौ आनन्दभुगिति व्यर्थमित्यतोऽभिप्रायमाह । न केवलमानन्दमय इति । सुवर्णप्रतिमायाः सुवर्णमयत्वेऽपि नसुवर्णभोगः तथा आनन्दमयस्यापि भगवत आनन्दाभावः प्रतीयेत अतस्तां प्रतीतिं वारयितुमानन्दभुगिति विशेषणमर्थवदिति भावः।

## प्रकाशिका

यत्र सुप्त इत्युपनिषद्वाक्यस्यायमर्थः । यत्र सुप्त्याख्यतृतीयस्थाने प्राज्ञं प्राप्य सुप्त अज्ञानावृतो जीव इत्यर्थः । तत् सुषुप्तं सुषुप्ताख्यज्ञानावृतजीवावस्थानरूपं स्थानम् । तस्मिन् सुषुप्तस्थाने, सुप्त्यवस्थायामिति यावत्। एकीभूतः विश्वतैजसाभ्यामेकीभूत इति ।

'स्वात्मतमो विना' इत्यत्र स्वात्मा च तमश्चेति द्वन्द्वैकवद्भावः । इदं चोपलक्षणम् । स्वरूपभूतसुखस्याप्यनुभवादित्यपि ज्ञेयम् । 'चित्तस्थो दर्शयेत् तस्माद्' इत्यत्र चित्तस्थः स्वप्नावस्थप्रेरको देवो दर्शयेत् वासनामयकरितुरगाद्यनेकपदार्थान् सृष्ट्वा अनन्तजीवदेहेषु प्रतिदिनं दर्शयेत् । तस्मात्तैजसः तैजसपदवाच्यसामर्थ्यविशेषसम्बन्धित्त्वात्तैजस इत्युच्यते । मनसो वैकारिकत्वेन तैजसत्वासम्भवादुक्तव्युत्पत्तिरेवाश्रयणीया । यथास्थित प्रज्ञानघनत्वस्य त्रिष्वपि साम्यात् प्राज्ञमात्रविशेषणत्वं कथमित्यत आह- **घनो जीव इति** । आनन्दभुगितिशब्दस्य यथा श्रुतार्थकथ्ने त्रिष्वपि साम्याद्विशेषमाह - **विषयभोगं विनेति** । बाह्यविषयभोगाख्यसुखं विना इत्यर्थः । इदं च प्राज्ञस्यैवोचितम् । सुप्तिकाले स्वाप्नविषयबाह्यविषयजसुखाभावस्यैवोचितत्वादिति भावः ।

## भाष्यविवृतिः

यत्र सुप्तः यत्र यस्यामवस्थायां सुप्तः न कञ्चन कामं कामयते न कञ्चनस्वप्नं पश्यति । अत्र कामाभावे दर्शनाभावे च सुप्त इति हेतुकथनम् । तत्प्रकारश्च - सुखरूपत्वात्सुर्विष्णुस्तमाप्तः आकारलोपेन सुप्तः । हरिं प्राप्तस्य नान्यकामना । **तथा सु सुप्तं, सुप्तं तु** तमः तत्प्राप्तः तेनावृत इति यावत् । स्वपेः क्विप् स डित् वचिस्वपि इति सम्प्रसारणं, हल इति दीर्घाभावः छान्दसः । ततश्च तमसा आवृतत्वात् न स्वप्नादिदर्शनम् । स्वात्मतमः कालातिरेकेन स्वप्नादि पश्यति । स्वप्नेत्युपलक्षणम् । तत् सुपुप्तं सुपुप्त्यवस्था । सुपुप्तस्थानः सुपुप्त्यवस्था स्थानं यस्य स तथोक्तः ।

एकीभूतः विश्वतैजसाभ्यां एकीभूतः ।प्रज्ञानघनः तमोवृतो जीवोघनः। "मूर्तोघन" इति स्मरणात् । तस्य सकालस्य प्रज्ञापकत्वात् प्रज्ञानः । प्रज्ञानशब्दस्य पूर्वनिपातः । अत एव घनप्रज्ञ इति वक्ष्यति । प्रचुरानन्दत्वादानन्दमयः । प्राचुर्यं च पूर्णत्वम् । चेतोमुखः ज्ञानस्वरूपमुखः मुखोपलक्षितसर्वावयवः । यद्वा मुखशब्दो मुख्यवाची, तथाच चेतसा मुख्यः ज्ञानपूर्ण इत्यर्थः । अत्रानन्दमयचेतोमुसर्वज्ञत्वसर्वेश्वरत्वादि चतुष्टयेऽपि समानं अन्यत्रातिदेशार्थं एक्रात्रानन्दमयत्वं चेतोमुखत्वं चाभ्यधात् । आनन्दभुक् क्रीडया आनन्दभुक् । आदित्यस्य दीपेनेव नित्यतृप्तस्य भोगेन प्रयोजनाभावात् । विषयं विना आनन्दभुक्त्वाद्विशेषः । प्राज्ञस्तृतीयःपादः।

## भाष्यार्थरत्नावलिः

तत् सुषुप्तमिति सुषुप्तपदप्रतिपाद्यमाह ।। **सुषुप्तमिति** ।। तुशब्दोऽवधारणे। तम इत्यज्ञानप्रचुरावस्थोच्यते । सैव सुषुप्तं ज्ञेयमित्यर्थः । अज्ञानावस्थायां सुषुप्तपदं निर्वक्तुं यत्र सुप्त इत्युक्तं । यस्यामवस्थायां सुप्तः सुखरूपं हरिं प्राप्तः । यद्वा सुप्त उपरतेन्द्रियवृत्तिर्जीवो भवति तस्मात् सावस्था सुषुप्तमुच्यते इत्यर्थः । तत्र ज्ञापकमुक्तं न कञ्चनकाममित्यादि। तद्व्याचष्टे ।। **हरिं प्राप्येति** ।। यतो जीवः परमानन्दरूपं हरिं प्राप्य प्रविश्याभिव्यक्तस्वरूपानंदत्वेन स्थितः अतो विषयान्नकामयेत् । यतः तदावृतः तमसावृतः अतो नैव पश्येत् । अतः सुष्टु सुप्तिः सुखरूपभगवत्प्राप्तिर्यत्रेति वा । सुष्टुसुप्तिरिंद्रियोपरतिर्यत्रेति वा व्युत्पत्या तमोऽवस्थासु सुप्तमित्यर्थः । न पश्येदित्यस्यापवादमाह ।। **स्वात्मेति** ।। कालं चशब्दाद् सुखं सुप्त्यवस्थां सुखं चेति वक्ष्यमाणत्वात् । सुषुप्तस्थान इत्येतत् सुषुप्ताख्यं स्थानमवस्था यस्याधीनेत्यर्थमभिप्रेत्य व्याचष्टे।। **तस्य स्थानस्येति**।। स्थूलं विश्वं सर्वगम्यत्वात् । तद्वानपि विश्वः । अर्श आदित्वात् । विश्ववत्वं च तद्भोक्तृत्वमिति निर्वचनस्य कृतप्रायत्वात्। तैजसप्राज्ञशब्दौ निर्वक्ति ।। **चित्तस्थ इति** ।। यस्माद्धरिश्चित्तस्थः यस्माच्च दर्शयेत् । यस्माच्च स्वप्नकृत्। तस्मात्तैजस इति योजना । तेजश्शब्दित ज्ञानप्रदत्वात् ज्ञानकार्यवासनामयनिर्मातृत्वाच्च तैजस इत्यर्थः । ईषदपि बाह्यं वासनामयं

वा न ज्ञापयतीति प्राज्ञ इत्यर्थः। ब्रह्मणैकीभूतो जीव इत्यन्यथा प्रतीतिनिरासाय व्याचष्टे।। **एकीभावमिति** ।। प्रज्ञानघनत्वं विश्वादिसाधारणमित्यतः कार्यप्रदर्शकतया व्याचष्टे ।। **घन इति** ।। तमोवृतो जीवः घनस्तमसा निबिडत्वात् । तस्य प्रदर्शनाद्घनप्रज्ञः विश्वोपि जीवं प्रदर्शयत्यतः तमोवृतो जीव इवेत्युक्तं । प्रज्ञानघन एवेत्येवकारार्थमाह ।। **तन्मात्रस्येति** ।। अत्र मातृशब्दोऽनभिमतव्यावर्तक इति भावेनोक्तं ।। **सकालस्य चेति** ।।

चशब्दोऽनुक्तसमुच्चये । यद्वा तमोवृतजीवपर्यंतं धावना मास्तु तमोहिघनं मेघवदावरकत्वाज्जीवे निबिडत्वाच्च । तन्मात्रस्य प्रदर्शनात् घनप्रज्ञः। यद्वा तन्मात्रे तदवच्छिन्नो यः कालः तमःप्रवृत्तिकालः । तस्य प्रदर्शनादित्यर्थः तस्यापि तमस्साधनत्वात् । आनन्दो ब्रह्मेत्यादिश्रुतेः आनंदमयः आनंद एवायनं तद्वानिति अन्यथाप्रतीतेरानंदप्राचुर्यार्थतया व्याचष्टे ।। **पूर्णानन्द इति** ।। चेतो ज्ञानमिव मुखस्थानीयं नातोतिरिक्तं मुखाधिकमगमीत्यन्यथा प्रतीतेर्व्याचष्टे ।। **चेतोमुख इति** ।।

ननु प्रज्ञानघनपदे व्याख्यातव्ये घनप्रज्ञपदव्याख्यानमसंगतमित्यत आह ।। **प्रज्ञान इति** ।। घनं प्रज्ञापयतीति घनप्रज्ञान इति समासे भवितव्ये विपरीतयोः पदयोः समास इति भावेन प्रमाणे व्याख्यानमिति भावः । विपरीतसमासत्वे प्रमाणे घनप्रज्ञान इति पठितव्यं घनप्रज्ञ इति तात्पर्यग्रहणमयुक्तमिति शङ्कां परिहरन् विपरीतसमासत्वे ज्ञापकमाह ।। **घनेति** ।। प्रमाणतयोदाहरिष्यमाणश्लोके वक्ष्यमाणत्वात् । अत्र विपरीतसमासो ज्ञायते । प्रमाणेच श्लोकगतमेव पदं व्याख्यातमिति भावः ।

ननु विश्वतैजसयोरपि जागृत्स्वप्नविषयभोगकृतजैवानन्दभोगोऽस्त्येव । कथमयमानन्दभुगिति विश्वस्य विशेष इत्यत आह ।। **विषयेति** ।। विषयभोगं स्थूलप्रविविक्ताख्यविषयभोगं विनाऽऽनन्दमात्रभुक्त्वादित्यर्थः । यद्वा विषयभोगं विना प्राज्ञात्मसंबंधेन योयोव्यक्त आनन्दस्तन्मात्रभुक्त्वादित्यर्थः। उक्तंचैकादशतात्पर्ये । "दक्षिणाक्षिस्थितो विष्णुर्भुङ्क्तेर्थान् जाग्रति स्थितान्। कण्ठसंस्थःतथा स्वाप्नान् जीवानन्दंच सुप्तिग" इति। आनन्दमयश्चेतोमुख इति प्राज्ञस्यैव विशेषणं । एष सर्वेश्वर इत्याद्यपि प्राज्ञवत् त्रिरूपस्यवेति

प्रतीयते तदयुक्तं अवस्थात्रयनियामकत्वादेर्विशेषशक्त्या कथंचिदवस्थितत्वेपि पूर्णानन्दत्वचेतोमुखत्वसर्वैश्वर्यादेर्ब्रह्मलक्षणस्य सर्वस्य वक्तव्यत्वादित्यत आह ।। **आनन्दमयेति** ।। ननु प्राज्ञविशेषणत्वे चोक्तयोरानन्दमयत्वचेतोमुखत्वयोः कथमन्यत्र साम्यमित्यत आह ।। **अन्यत्रेति** ।। रूपान्तरेप्यनयोर्गुणयोरतिदेशार्थं सर्वत्र वचने गौरवादेकत्र प्राज्ञ एतद्विशेषणद्वयमुक्तमित्यर्थः ।

## पदार्थदीपिका

प्राज्ञस्य स्थानादिप्रतिपादनाय सुषुप्तस्थान इत्यादिकोपनिषत् । तत्रसुषुप्तस्थानं कीदृशमिति शंकायां लक्षणोक्त्या तं निरूपयितुं यत्र सुप्त इत्यादिवाक्यं प्रवृत्तं। तत्र सुषुप्त्यवस्थां गतस्य कामराहित्ये स्वप्नदर्शनाभावे च हेतुसूचकं सुप्त इति पदं प्रमाणेनैव व्याचष्टे ।। **सुषुप्तंत्विति** ।। भावे क्तः । सुप्तिरेव सुषुप्तं । तमोऽज्ञानं अज्ञानकार्यमिति यावत् । हरिं प्राज्ञनामकं प्राप्य स्थितः पुमान् । तदावृतः तेन तमसाऽऽवृतः यतोऽतो जीवः किमपि नकामयेत् । नैवपश्येत् कमपिपदार्थं स्वप्नं चेति शेषः ।

ननु स्वरूपादिज्ञानं तावदवश्यमंगीकर्तव्यं । एतावंतं कालं सुखमहमस्वाप्समित्युत्तरकालपरामर्शात् । अतो न पश्येदित्येतदयुक्तमित्यत आह ।। **स्वात्मेति** ।। स्वात्मसहितं तमः स्वात्मतमः कालं च विनेति संबंधः । उपलक्षणमेतत् । वक्ष्यमाणरीत्या सुपुप्त्यवस्थां सुखं च विनेत्यपि द्रष्टव्यं ।। **तस्येति** ।। तमः कार्यसुपुप्त्याख्यस्थानस्येत्यर्थः। विश्वं स्थूलमित्यादिना विश्वशब्दस्य निरुक्तत्वात्तैजसप्राज्ञशब्दौ निर्वक्ति ।। **चित्तस्थइत्यादिना** ।। "मनस्यंतस्तुतैजस"इति वचनात् तैजसः चित्ते स्थितः सन् स्वाप्नपदार्थं दर्शयेद्यतोऽतस्तैजसेत्यर्थः । अत्र चित्तस्थस्य तैजसत्वं नाम तेजोवत्त्वमेव । नतु तैजसाहंकारकार्यत्वं । चित्तशब्दोक्तस्य मनसो वैकारिकाहंकारकार्यत्वादिति द्रष्टव्यं ।

।। **नबाह्यमिति** ।। तथाच प्रकर्षेण न ज्ञापयतीति प्राज्ञ इति व्युत्पत्तिर्द्रष्टव्या । एकीभूत इत्येतदप्रतीतेर्व्याचष्टे ।। **एकीभावमिति** ।। सुपुप्त्यवस्थायां विश्वः तैजसश्चेत्युभौ तेन प्राज्ञेन एकीभावं व्रजेतां यतोतः

प्राज्ञ एकीभूत इत्युच्यत इति योज्यं । प्रज्ञानघनो ज्ञाननिबिड इत्यन्यथा-प्रतीतिं निवारयन् व्याचष्टे ।। **घनोजीवइति** ।। तमसाऽज्ञानेन वृतो जीवो घन इत्युच्युते। सकालस्येत्युपलक्षणं। सषुप्त्यवस्थस्य ससुखस्येत्यपिद्रष्टव्यं। तथा च कालावस्थासुखसहितस्य तन्मात्रस्याज्ञनावृतजीवमात्रस्य प्रदर्शना-त्प्रज्ञानघन इत्यर्थः । अनेन प्रज्ञानघन एवेत्येवकारस्य बुद्ध्या विविक्तेन घनपदेन संबंधः । तथा च कालावस्थासुखसहितमज्ञानयुक्तं घनं जीवमेव प्रज्ञापयतीति प्रज्ञानघन एवेत्यर्थो द्रष्टव्यः । आनंदमय इत्यत्र मयटो विका-रार्थत्वप्रतीतिं वारयन्व्याचष्टे ।। **आनंदमयइति** ।। तथाच मयट् प्राचुर्यार्थे। प्राचुर्यं च पूर्णत्वमित्युक्तं भवति । चेतोमुख इत्यत्र "चित्तं तु चेतोहृदय"मित्यभिधानात् चेतःशब्दोंतःकरणपरइति प्रतीतिनिरासाय व्याचष्टे ।। **चेतोमुखइति** ।।

ननु घनं प्रज्ञापयतीति घनप्रज्ञान इति भाव्यं प्रज्ञानघन इति कथमित्यत आह ।। **प्रज्ञानघन इति** ।। अग्न्याहितादित्वाद्घनशब्दस्य परनिपात इति भावः । तत्र ज्ञापकमाह ।। **घनप्रज्ञइतीति** ।। ननु विश्वतैजसयोः अप्यानंदभुक्त्वादानंदभुगिति प्राज्ञस्यैव कोविशेषः कथ्यत इत्यत आह ।। **विषयभोगंविनेति** ।। विश्वतैजसयोस्तु बाह्यांतर्विषयभोगेनानंदोक्तेरिति भावः ।। **आनंदमात्रेति** ।। विषयभोगानभिव्यक्तकेवलस्वरूपानंदेत्यर्थः । सुषुप्तस्थान एकीभूत इत्यादिवाक्योक्तमानंदमयत्वचेतोमुखत्वरूपं विशेषण-द्वयं इतरविशेषणवन्न प्राज्ञमात्रनिष्ठमिति वदन् "एषसर्वेश्वर"इत्यादि-नोक्तान्यपि विशेषणानि न सन्निहितप्राज्ञमात्रनिष्ठानि किंतु विश्वादिचतुष्टय-साधारणानीत्याह ।। **आनंदमयेति** ।। आनंदमयचेतोमुखेत्यत्र भावप्रधानो निर्देशः। ननु"एषसर्वेश्वर"इत्यादिवाक्योक्तविशेषणानां सर्वसाधारण्यसंभवेपि प्राज्ञमात्रनिष्ठत्वेनोक्तयोरानंदमयत्वचेतोमुखत्वयोः कथं सर्वसाधारण्यमित्यत आह ।। **अन्यत्रेति** ।। विश्वादित्रयेत्यर्थः । एकत्र प्राज्ञे।

## उपनिषत्

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी ।**
**एष योनिः सर्वस्य प्रभावाप्ययौ ही भूतानाम् ।।**

## भाष्यम्

एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः ।
'परमात्मा चतूरूपः सर्वप्राणिशरीरगः ।।
विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ।
तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु ।।
चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः ।
मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः ।।
तथाऽपि मुखशब्दोऽयं पूर्णत्वं सूचयेद् विभोः ।
ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन् स्वतः ।।"

इति मार्कण्डेये ।

पुर्णानन्दस्वरूपस्य क्रीडा भोगो नचान्यथा ।
यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन ।।"

इति ब्रह्मतर्के ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - एवं विश्वादीनां त्रयाणां महिमानं निरूप्य नांतःप्रज्ञमित्यादिना तुरीयस्य महिमानं विवक्षुश्चतुर्णां महिमानं युगपदाह ।। **एषसर्वेश्वर इत्यादिना** ।। एप योनिः सर्वस्येत्युक्तं विशदयन्नाह ।। **प्रभवाप्ययौ हि भूतानामिति** ।। यस्माद्भवत इति शेषः ।

**भाष्यार्थः** - उक्तविशेषणानां चतुर्णामपि समानत्वे कथं योजनेत्यतस्तां दर्शयति ।। **एष इति** ।। ननु भवतु सर्वेश्वरत्वादि चतुष्टयेपि समं । नत्वानंदमयत्वचेतोमुखत्वे । तयोः प्राज्ञनिष्टत्वेनोक्तत्वादिति शंकां प्रमाणेन वारयति ।। **परमात्मेति** ।। मुखस्यैव ज्ञानस्वरूपत्वप्रतीतिं निवारयन्नाह ।। **मुखशब्द इति** ।। मुखशब्दस्तु सर्वस्यापि देहस्योपलक्षणो मुखवाचकः।

ननु मुखवाचकमुखशब्देनोपलक्षणे किं निमित्तमित्यताह।। **तथापीति** ।। अस्य योजना अयं मुखशब्दो यद्यपि स्वतो मुखवाची तथापि विभोर्ज्ञानस्य पूर्णत्वं सूचयेत् कुतः मुख्यवाचित्वात् । तथाच चेतसा ज्ञानेन मुखो मुख्यः-

पूर्ण इति । ननु स्थूलभुक् प्रविविक्तभुगिति भोग उक्तः । तेन भोगेनातिशयभावे अपरिपूर्णत्वं तदभावे स्थूलादिभोगायोगः इत्यतोऽतिशयाभावेपि घटयन्नाह ।। **पूर्णेति** ।। भोगःक्रीडा अन्यथाविशेषको नच। विशेपासंपादको व्यापारः कुत्र दृष्टः येन भगवतो भोगोनाम क्रीडेति प्रतीम इत्यत आह ।। **यथेति** ।।

## गूढकर्तृका टीकाटिप्पणी

**नान्तःप्रज्ञ इत्यादिनेति** ।। द्वितीयखंडेनेतिशेषः । महिमानं साधारणम् ।। **एषसर्वेश्वर इति** ।। एष चतूरूपी हरिः । एष इत्यभ्यासस्तात्पर्यार्थः ।। **इत्युक्तमिति** ।। जगत्कारणत्वमित्यर्थः ।

## प्रकाशिका

मुखशब्दस्य सर्वाङ्गोपलक्षकत्वेऽपि ज्ञानरूपजीवेऽसाम्यान्मुखशब्दो मुख्यवाचीत्याह - पूर्णत्वमिति ।। यद्यप्यानन्दमयत्वचेतोमुखत्वसर्वज्ञत्वादिकं प्राज्ञस्यैवेति प्रतीयते । 'आनन्दमयश्चेतोमुखः प्राज्ञः' इति प्राज्ञविशेषणतया स्पष्टमुक्तत्वात् । एष इत्यव्यवहितपरामर्शेन प्राज्ञविशेषणताया एव प्रतीयमानत्वात् । तथापि 'आनन्दमयोऽभ्यासात्' इति सूत्रेणानन्दमयाधिकरणे आनन्दमयात्मकत्वज्ञानात्मकत्वादीनाम् 'अथातो ब्रह्मजिज्ञासा' इत्यत्रोक्त ब्रह्मशब्देन प्रकृतमूलरूपविषयताया एव निर्णीतत्वात् 'एष योनिः सर्वस्य' इति सर्वकर्तृत्वेनोक्तमूलरूपे तदुपयुक्तसर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वानामप्यावश्यकत्वात् षण्णामपि विशेषणानां न प्राज्ञमात्रविशेषणता । मूलरूपगुणानां च सहस्रधा विभक्तगङ्गाप्रवाहेष्वनुगतमूलगङ्गानुगुणभूतपावित्र्यस्येव सर्वावतारेष्वपि वक्तव्यत्वात् । अत एष इति परामर्शो दूरस्थविश्वादीनामपि वाच्यः । एकत्रोक्तपूर्णानन्दत्वपूर्णप्रज्ञत्वयोरपि सर्वत्रानुषङ्गः कार्यः । तर्ह्येकत्र विशिष्योक्तिः किमर्थेति चेत्, सत्यम् । 'इयं माता तव वन्द्या' इत्येकत्रोक्तवन्दनस्योपलक्षणतया मातृमात्रेऽप्यनुषङ्गवदेकत्रोक्तयोरप्यनयोस्तज्जातीयेष्वप्यनुषङ्गसम्भवात्, अनन्तावतारेषु पृथगुक्तौ वाक्यगौरवाच्चैकत्रोक्तिरिति ब्रूमः । तदिदमुक्तमाचार्यैः - 'अन्यत्रातिदेशार्थम्' इत्यादि ।

'प्रभवाप्ययौ हि भूतानाम्' इत्यत्र भूतानां प्रभवाप्ययौ मूलरूपाद्भगवतो भवतः । हीत्यनेन 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिप्रसिद्धिं सूचयति । स्वरूपस्थानभोगकथनार्थं क्रमेण मन्त्रत्रयमिति ज्ञेयम् ।

## भाष्यविवृतिः

एष भगवान् चतूरूपः सर्वेश्वरः । भूतानां प्रभवाप्ययौ प्रभवाप्ययनिमित्तं निमित्ते निमित्तिव्यपदेशः । अत एव महाभाष्ये द्विर्वचनेऽचि इत्यत्र द्विर्वचननिमित्ते इति व्याख्याय अन्तरेण अपि निमित्तशब्दं निमित्तशब्दार्थोऽवगम्यते । यथा दधित्रपुसं प्रत्यक्षोज्वरः ज्वरनिमित्तमिति गम्यते । नडवलोदकं पादरोगः । पादरोगनिमित्तमिति गम्यते इत्युदजेह्रियत ।

## भाष्यार्थरत्नावलिः

ननु उत्तरवाक्ये प्राज्ञः सर्वेश्वर इत्युच्यते । कथं तस्य सर्वसाम्यमित्यत आह ।। **चतूरूप इति** ।। ननु उत्तरवाक्ये सन्निहितप्राज्ञपरामर्शसंभवे प्रकृतरूपत्रयसंभवेवा उक्तवक्ष्यमाणरूपचतुष्टयपरमार्शो न्याय्य इत्यतः परामर्शविषयं दर्शयितुं उक्तमात्मेति । एष इति न सन्निहितपरामर्शः किंतु सोऽयमात्मा चतुष्पादित्युपक्रमे प्रकृतचतूरूपपरामर्श एव अत एवोपनिषदि यच्छब्दं संयोज्य एषोऽन्तर्यामीत्यनुवादेन एष सर्वेश्वर इत्यादिविधिः। अंतर्यामित्वस्य सिद्धत्वेन विधानानुपपत्तेः । अन्तर्यामितयानुवादे वा आत्मशब्दत एवग्राह्य इति भावः । आनंदमयत्वचेतोमुखत्वयोः सर्वरूपसाम्ये प्रमाणमाह ।। **परमात्मेति** ।। मयटः प्राचुर्यार्थत्वं तादात्म्यार्थत्वंचेति भावेनोक्तं ।। **पूर्णानंदमयानीति** ।। तुशब्दोवधारणे । सर्वाण्येवेत्यन्वेति । पूर्णज्ञानत्वाच्चेतोमुखानि । पूर्णज्ञानात्मकस्वकीयरूपत्वतः स्वकीयरूपत्वाद्विग्रहवत्वाच्च तेजोमुखानीति योज्यं ।

ननु मुखमात्रस्य ज्ञानस्वरूपमुच्यते कथं सर्वस्यतद्व्याक्रियते इत्यत आह ।। **मुखशब्द इति** ।। ननु पूर्णज्ञानत्वाच्चेतोमुखानीत्ययुक्तं । मुखशब्दस्य प्रसिद्धमुखपरत्वेन भानाच्चेतसः पूर्णत्वबोधकशब्दाभावादित्यत आह ।। **तथापीति** ।। अपि यद्यपि अयं मुखशब्दः स्वतः स्वरसप्रतीतितो

मुखवाची । मणिर्मुखं प्रधानं चेत्युत्तमस्य वचोभवेदित्याभिधानेन मुख्यवाचित्वाच्च । तस्य ज्ञानेन प्रधान इति लाभात् पूर्णत्वं ज्ञानस्य सूचयेत् । घनेनोत्तम इत्युक्तं घनपूर्णइति लाभादिति भावः । नन्वंगांतरवाचकं पदमप्रयुज्य मुखवाचकशब्देन सर्वदेहोपलक्षणं कुत इत्यत आह ।। **मुख्यवाचित्वादिति** । स्वतो वचनवृत्या मुखवाच्यपि मुख्यवाचित्वादुत्तमांगवाचित्वान्मुखशब्द एव सर्वस्य देहस्याप्युपलक्षक इत्यर्थः ।

ननु आनंदमयः पूर्णानंदेति व्याख्यातं । तदयुक्तं पूर्णानंदत्वे स्थूलभुक् प्रविविक्तभुगानंदभुगिति भोगोक्तिविरोधोऽपूर्णस्यैव भोगदर्शनादित्यत आह ।। **पूर्णानंदेति** ।। नचान्यथा विशेषापादको न भवति । तत्र दृष्टांतो यथेति । ननु यदि कश्चन विशेषो भोगेन नास्ति तर्हि "आगमिष्यत्सुखं चापि तच्चास्त्येव सदापि तु। तथाप्यचिंत्यशक्तित्वाज्जातं सुखमतीवचे"त्यत्र आगमिष्यत्सुखपूर्णस्याप्यचिंत्यशक्त्या सुखं जातमित्युच्यते इत्यल्प विशेष स्वीकाराद्विरोध इवशब्दस्य अल्पार्थत्वात् जातमिव । वस्तुतस्तु, नकोपि विशेष इत्यर्थाङ्गीकारेऽचिंत्यशक्तित्वादिति हेतूपन्यासवैयर्थ्यादिति चेन्न । भोगाभावेपि सुखस्य सत्वाद्व्यतिरेकव्यभिचाराद् भोगस्याकारणत्वात् । केवलं भोगः क्रीडैव इत्यङ्गीकृत्यापि तदैक्षतेत्यादाविवाचिन्त्याद्भुतशक्त्या- जातमिवेत्यङ्गीकारेणाविरोधादिति दिक् ।

## पदार्थदीपिका

नन्वेषसर्वेश्वरइत्यादिवाक्योक्तानामपि विशेषणानां कथं विश्वादिरूपसाधारण्यं । एष इति पदेन प्राज्ञस्तृतीय इत्यव्यवहितप्राज्ञस्यैव परामर्शादित्यत आह ।। **एषइति** ।। तथाचैष इत्यस्य पूर्वप्रकृतरूपचतुष्टयपरामर्शकत्वेन प्राज्ञमात्रपरामर्शकत्वानंगीकारादिति भावः । आनंदमयत्वादिविशेषणानां रूपचतुष्टयेपि साम्ये प्रमाणमाह।। **परमात्मेति**।। तुरीयस्यापि नासिकामूलमारभ्यद्वादशांगुलांते मस्तकमध्ये व्यवस्थितत्वोक्त्या सर्वप्राणिशरीरगतत्वं मंतव्यं । चेतोमुखत्वे हेतुः पूर्णेति । स्वरूपतः । स्वरूपत्वतः । अत्र चेतोमुख इति मुखस्यैव ज्ञानस्वरूपत्वं प्रतीयतेऽतस्तां निवारयति ।। **मुखशब्दस्त्विति** ।। लक्षणाबीजसंबंधस्तु एकदेशैकदेशिभावादिर्द्रष्टव्यः ।

तथाच दशामात्रं दत्तमित्यादाविवैकदेशेनैकदेशिनः सर्वस्यापि देहस्य लक्षणा कार्येति भावः । यद्वा चेतोमुख इत्यत्र मुखो मुख्यः । उत्तमइति यावत् । उत्तमत्वं चात्र पूर्णत्वमभिप्रेतं । तथाच चेतसाज्ञानेन मुखः उत्तमः पूर्ण इत्यर्थांतरमभिप्रेत्याह ।। **तथापीत्यादिना** ।। अयमर्थः । अपि यद्यपि । अयं मुखशब्दः स्वतः मुखवाची सन् भवति । तथापि विभोर्ज्ञानस्य पूर्णत्वं सूचयेत् । कुतः मुखशब्दस्य मुख्यवाचित्वात् । मणिर्मुखं प्रधानं चेत्युत्तमस्य वचोभवेदिति वचनात् । उत्तमत्वं च पूर्णत्वमेवाभिप्रेतं । अत एव पूर्णत्वं वदेदित्यनुक्त्वा सूचयेदित्युक्तमिति ।

ननु स्थूलभुक् प्रविविक्तभुगिति विश्वतैजसयोर्विषयभोग उक्तः । सतु न युक्तः। तथात्वे भगवदानंदस्य विषयभोगाधीनत्वप्राप्त्या पूर्णानंदत्वभंगापत्तेः। यदि पूर्णनंदत्वांगीकारस्तर्हि विषयभोगायोग इत्याशंकां ब्रह्मतर्कवाक्येन परिहरति ।। **पूर्णानंदेति** ।। पूर्णानंदस्वरूपस्यापि हरेः स्थूलादिविषयभोगः क्रीडैव नचान्यथा । अविद्यमानातिशयितानंदजनको नैवेत्यर्थः । अत्र दृष्टांतमाह ।। **यथेति** ।। एवं विपयभोगेन भगवदानंदस्य विशेषो नास्तीति भावः ।

## उपनिषत्

**अत्रैते श्लोका भवन्ति ।**

**बहिःप्रज्ञोविभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।**
**घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ।।**

## भाष्यम्

'प्रमाणस्य प्रमाणं च बलवद् विद्यते मुने ।
ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ।
अत्र श्लोका भवन्तीति चकारैव पृथक पृथक् ।।'

इति गारुडे ।

खण्डचतुष्टयेऽपि पृथक् पृथक् ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - उक्तार्थेषु मंत्रानपि वक्तुमाह ।। **अत्रैत इति** ।। विश्वो बहिःप्रज्ञः तैजसोंतःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्यत्र मंत्रंपठति।। **बहिरिति** ।।

**भाष्यार्थः** - ननु स्वोक्तार्थे अत्र श्लोकाभवंतीति मंत्रोदाहरणमयुक्तं स्ववचनस्य प्रमाणत्वे तद्वैयर्थ्यादप्रामाण्ये प्रमाणभूतमंत्रसंवादकरणायोगात् ।। मैवं ।। स्ववचनस्य प्रमाणत्वेपि दाढ्र्याय तदुदाहरणोपपत्तेरित्याह ।। **प्रमाणस्येति** ।। मंत्रान् पृथक् पृथक्चकार उदाहरदित्युक्तं तत्कुत्र कुत्रेति जिज्ञासायामाह **।। खंडचतुष्टय इति ।।**

## गूढकर्तृका टीकाटिप्पणी

**।। उक्तार्थ इति** ।। मन्त्रद्रष्टा वरुणः स्ववाक्यस्य प्रमाणत्वेऽपि दाढ्र्याय स्वोक्तार्थे ब्रह्मदृष्टान् मन्त्रान् वक्तुं प्रतिजानीत इत्यर्थः । **अत्रैत इतीति** ।। श्लोकाः मंत्राः । भवन्ति संवादिनोभवन्तीत्यर्थः । स्मृत इति ब्रह्म स्वोक्तार्थे स्मृतिं प्रमाणयतीति ज्ञेयम् ।

## भाष्यविवृतिः

उक्तार्थे प्रमाणमध्यैयत अत्रेति । अत्र विश्वतैजसप्राज्ञानां उक्तभोगादि रूपार्थे भवन्ति प्रमाणानि इति शेषः । ननु सलिलेश्वरप्रत्यक्षमेव प्रमाणतया वर्तते कुत इदं ब्रह्मदृष्टश्लोकोदाहरणं । नैष दोषः । यतः सलिलेश्वर प्रत्यक्षाद् ब्रह्मप्रत्यक्षमतिशेतेऽतस्तद्दृष्टश्लोकोदाहरणमेव । खण्डचतुष्टयेऽप्यौच्यत । तदिदं भाष्यकारः व्याक्शासीत् 'चतुर्धावस्थितो देहे परमात्मा सनातनः' इत्यारभ्य खण्डचतुष्टये पृथक् पृथगित्यन्त्येन ।

## भाष्यार्थरत्नावलिः

उपनिषदि अत्रैते श्लोका भवंतीति प्रमाणोदाहरणमयुक्तं । स्वस्यापि प्रमाणत्वादित्यत उपनिषदः प्रमाणत्वेपि दाढ्र्याय मंत्रोदाहरणं कृतमित्यत्र प्रमाणं पठति ।। **प्रमाणस्येति** ।। बलवद्दाढ्र्यापादकं पृथक् पृथक् प्रमाणं चकार प्रमाणत्वेनोदाहरदित्युक्तम् । स्थानं दर्शयति।। **खण्डेति**।। उपनिषदुक्तो वैश्वानरो विश्व एव नान्यः प्रज्ञानघन इत्यत्र विपरीतसमासः

विश्वादीनांच न स्वरूपभेद इति विशेषज्ञापनपूर्वं बहिःप्रज्ञत्वादि कार्यकरत्वे मंत्रः पठ्यते ।। **बहिःप्रज्ञ इति** ।। तैजसस्यापीति संबंधः । तथाशब्दः कार्यकारित्वांशे उपमायां समुच्चयेवा ।

## पदार्थदीपिका

नन्वेतदुपनिषद्द्रष्ट्रा सलिलेश्वरेण स्वोक्तार्थे अत्रैते श्लोका भवंतीति ब्रह्मदृष्टमंत्राः प्रमाणत्वेनोदाह्रीयंते तदयुक्तं । सलिलेश्वरोक्तं तावत्प्रमाणमप्रमाणंवा । आद्ये मंत्रोदाहरणं व्यर्थं । द्वीतीये अप्रमाणभूतेऽर्थे प्रमाणभूतमंत्रोदाहरणायोगादित्याशंकां पुराणवाक्येन परिहरति ।। **प्रमाणस्येति** ।। प्रमाणस्यापि संवादभूतं प्रमाणं विद्यते चेत्तर्हि तत्प्रमाणं बलवदेव भवति । अत्रार्थे एतदुपनिषदुक्तं प्रमेयं दृष्टांत इत्याह ।। **ब्रह्मदृष्टानिति** ।। प्रमाणशेषोक्तं पृथक्पृथगित्येतदप्रतीतेः स्वयं व्याख्याति ।। **खंडचतुष्टयेऽपीति** ।।

## उपनिषत्

**दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।**
**आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्युक्तार्थे मंत्रंपठति ।। **दक्षिणेति** ।।

## गूढकर्तृका टीकाटिप्पणी

।। **दक्षिणेतीति** ।। मुखे अग्रभागे । अन्तरित्यस्य विवरणं मनसीति । अत्र मनःशब्देन कंठो ग्राह्यः। आकाशेच हृदि हृदयाकाशे। हृत्कर्णिकाग्रे । व्यवस्थितः अवस्थितः ।

इदमत्र रहस्यम् । प्रादेशपरिमिते हृदयकमले प्रादेशपरिमितः पुरुषोत्तमो जीवानामाश्रयः सन् सर्वदैव तिष्ठति । अङ्गुष्ठाग्रप्रमाणके हृत्कर्णिकामूल अङ्गुष्ठाग्रप्रमाणको मूलेशनामा हरिर्जीवानामाधारः सन्नवतिष्ठते । अङ्गुष्टप्रमाणके हृत्कर्णिकाग्र अङ्गुष्टप्रमाणकः प्राज्ञः सुषुप्तौ सर्वजीवानां प्रवेशाधिकरणः (णं) सन् प्रतिष्ठते । जाग्रदवस्थायां ते जीवाः प्राज्ञाद्वि-

युज्यन्ते। "सोऽयं त्रिरूपोभगवान्" हृद्ययनात् "हृदयाख्य इति कीर्तित"इति। यथोक्तं वृहद्भाष्ये । "हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः । जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः। हृत्कर्णिकामूलगतः सोऽङ्गुष्टाग्रप्रमाणकः। मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः । अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ । प्रविशंति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा । सोऽयं त्रिरूपोभगवान् हृदयाख्यः प्रकीर्तित" इति ।

अत्र विश्वादिरूपाणि देहगतान्येव नजीवगतानि । त्रिधा देहे व्यवस्थितः इत्युक्तत्वात् । अतस्तत्र प्राज्ञो देहाङ्गुष्ठपरिमित एव न जीवाङ्गुष्ठ परिमित इति बोध्यम् । यथोक्तं काठकभाष्ये । "देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि । जीवस्य सतु विज्ञेयो जीवाद् भेदेन मुक्तये" इति । एवं प्रमाणोक्ते प्रादेशादिप्रमाणके रूपद्वयेऽपि द्रष्टव्यम् । समानन्यायादिति संक्षेपः ।

## भाष्यविवृतिः

जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्येतानि ' "दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तुतैजसः । आकाशे च हृदि प्राज्ञः "इत्येतैर्वाक्यैर्व्यवृणोत्। विवरणंच जाग्रदवस्थायां अक्ष्यादिस्थानविशेषनिरूपणेन ।

## भाष्यार्थरत्नावलिः

जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्येतदवस्थामात्रपरत्वप्रतीति निवारणायाधिष्ठानपरत्वेन व्याकुर्वन् मंत्रः पठ्यते ।। **दक्षिणाक्षीति** ।। त्रिधेत्यत्र एक एवेत्यनुवर्तते ।

## उपनिषत्

**विश्वोहि स्थूलभूङ् नित्यं तैजसः प्रविविक्तभुक् ।**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

स्थूलभुक् प्रविविक्तभुगानंदभुगित्युक्तार्थे मंत्रं पठति ।। **विश्वेति** ।।

## गूढकर्तृका टीकाटिप्पणी

।। **विश्व इतीति** ।। शिष्यान्प्रति मन्त्रद्रष्टृवचनम् । एवमुत्तरत्रापि ।

## भाष्यविवृतिः

स्थूलभूक्प्रविविक्तभुक् आनन्दभुक् इत्युक्तार्थेऽयंमन्त्रः **विश्वोहिस्थूलभुगिति**।

## भाष्यार्थरत्नावलिः

आनंदभुक्त्वस्य त्रितयसाधारणत्वात् विश्वः स्थूलभुक् तैजसः प्रविविक्तभुक् प्राज्ञः आनन्दभुगिति कथमयं भोगविशेष इत्याशङ्कां परिहरन्मंत्रः पठ्यते ।। **विश्व इति** ।। नित्यमिति सर्वत्र संबध्यते । स्थूलभोगस्य तैंजसप्राज्ञावृतत्वं विश्वनियतत्वं । प्रविविक्तभोगस्य विश्वप्राज्ञावृतत्वं तैजस नियतत्वं । विषयभोगं विनानन्दमात्रभोक्तृत्वमानन्दस्य प्राज्ञमात्रनियतत्वमिति विवेकः ।

## उपनिषत्

**स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।**
**आनन्दं च तथा प्राज्ञस्त्रिधा तृप्तिं विजानथ ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - अत्रैव मंत्रांतरं पठति ।। **स्थूलमिति** ।। स्थूलं कर्तृ विश्वं तर्पयत इत्यन्वयः । आनंदमानंदः ।

## गूढकर्तृका टीकाटिप्पणी

**स्थूलमितीति** ।। स्थूलं कर्तृ विश्वं कर्म । एवमग्रेऽपि । नन्वानन्दशब्दस्य पुल्लिङ्गत्वादानन्दमिति कथमित्यतश्छान्दसोऽयं प्रयोग इत्याशयेनाह ।। **आनन्दमानन्द इति** ।। कर्मत्वभ्रमनिवारणार्थत्वे प्रथममेव निराकुर्यादिति भावः ।

## भाष्यविवृतिः

विश्वादीनां स्थूलादिभोक्तृत्वमेव कुतः इत्यतोऽब्रवीत् ।। **स्थूलं तर्पयत इति** ।। यद्धि यस्य तर्पकं स तद्भुङ्क्ते ।

## भाष्यार्थरत्नावलिः

असाराणां स्थूलादीनां कथं भगवत्तर्पकत्वमिति शङ्कां परिहरन् मंत्रः पठ्यते ।। **स्थूलमिति** ।। स्थूलशब्दो विशेषार्थः । शुभं स्थूलं प्रविविक्तं चेत्यर्थः। आनन्दमानन्दश्च । ननु तमोयोग्यानां सुप्तौ स्वरूपभूत आनन्द एव नास्ति । कथं सभगवतो भोग्यः स्यात् । कथं वा नित्यसंसारिणां सुप्तौ व्यक्तः आनन्दः शुभःस्यात् । मुक्तियोग्यसुखस्यैव शुभत्वात् । नच मोक्षयोग्यसुप्तिविषयमिदं प्रकरणमिति युक्तं । सर्वसाधारण्यप्रतीतेरिति चेदत्र केचित् । तमोयोग्यानां सुप्तौ सुखाभावानुभव एव । न सुखानुभवः, स एव हि तेषामानन्दपदेनोच्यते । सच दोषाभावरूपत्वात् शुभ एवेति । तद्भोग ईश्वरस्योपपद्यते । नित्यसंसारिसुखस्य मुक्तियोग्यसुखादतिविलक्षणत्वेऽपि इदानीं दुःखासामानाधिकरण्यादुच्चताहेतुत्वाच्च शुभत्वमस्त्येवेति तद्भोगोप्युपपद्यते इत्याहुः । अन्येतु तमोयोग्यानां सुप्तौ सुखाभावे एतावंतं कालं सुखमहमस्वप्समित्यौत्तरिकानुस्मृतिसिद्धसौषुप्तिकानुभवविरोधः। नच सुप्तौ सुखाभावे सुखभ्रम एवेति वाच्यं । सुखदुःखविषये भ्रमानुपपत्तेः । अत एव "दुःखे च सुखमानिन" इत्यस्य दुःखसाधने सुखसाधनत्वमानिन इति सांप्रदायिकानां व्याख्यानं । तस्मात्प्रकारांश एवान्यथात्वं तज्ज्ञानस्य न धर्म्यंश इति न दुःखाभावे सुखभ्रमोऽयं । किंच प्राक्पठितभागवततात्पर्ये "जीवानंदंच सुप्तिग" इति साधारण्येन सुप्तौ भगवान् जीवानंदं भुङ्क्त इत्युक्तं । न तु सज्जीवानंदमिति । तेन ज्ञायतेऽखिलानां सुप्तावानंदोऽस्तीति । न च तेषां दुःखैकमात्रस्वरूपत्वोक्तिविरोधः मोक्षयोग्यानां स्वरूपे मुख्येन भिन्नाभिन्ननीचतोत्पादवत् तामसनां सुप्तौ भगवत्संपर्कवशेन भिन्नाभिन्नतात्कालिकसुखोत्पादसंभवात्तस्य च तात्कालिकोच्चताहेतुत्वात् तद्भोक्तृत्वं भगवत उपपद्यत इत्याहुरित्यलम् ।

### उपनिषत्

**त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।**
**वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** -यदुक्तं विश्वादिस्वरूपं तत्स्थानं, तद्भोज्यं तत्सर्वथा ज्ञेयमित्या-शयवान् तज्ज्ञातुः फलमाह ।। **त्रिष्विति** ।।

## गूढकर्तृका टीकाटिप्पणी

**विश्वादिस्वरूपस्थानं तद्भोज्यमिति** । द्वन्द्वैकवद्भावोऽयम् ।। **त्रिष्वि-तीति** ।। त्रिषु धामसु जागरितादिस्थानेषु । यद्भोज्यं स्थूलादि। यश्च भोक्ता विश्वादिः । एतदुभयं भोक्तृभोज्यरूपम् । स्थानत्रयं च यस्तु वेद स दुष्टस्य दुष्टान्नं भुञ्जानो नलिप्यते तद्भोजननिमित्तपापफलं न प्राप्नो-तीत्यर्थः । स ज्ञानी विषयान् भुञ्जानोऽनुभवन्नपि न लिप्यते । तत्कृतमुच्चत्वादिविकारं न प्राप्नोतीत्याहुः ।

## भाष्यविवृतिः

तात्पर्यद्योतनाय वेदितुः फलमाह ।। **त्रिष्विति** ।।

## भाष्यार्थरत्नावलिः

स्थानत्रये भोग्यत्रयं भोक्तृत्रयं विजानथेत्युक्तविज्ञानफलं च क्रमेण प्रति-पादयन् मंत्रः पठ्यते ।। **त्रिष्विति** ।। धामसु स्थानेषु । अवस्थासुच । एतदुभयं दक्षिणाक्ष्यादिषु स्थित्वा जाग्रदाद्यवस्थासु भोक्तारं तत्र भोज्यं च इत्युभयमित्यर्थः । स भुंजनो नलिप्यत इत्यस्य सोऽपरोक्षज्ञानी। अधिका-रिविशेषः। निषिद्धमनिषिद्धंवा भुंजानः आनंदह्रासदोषेण नलिप्यत इत्यर्थः। मुक्तिप्रतिबंधलक्षणदोषाभावस्य ज्ञानिमात्रसाधारण्यात् । यथोक्तं "कामकारेण चैक" इति ।

## उपनिषत्

**प्रभवः सर्वभावानां सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ।।**

## भाष्यम्

**'प्रभवः सर्वभावानां विष्णुरेव न संशयः ।**
**इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् ।**
**सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः ।।'**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** -एष योनिः सर्वस्येत्यत्र मंत्रं पठति ।। **प्रभव इति** ।। प्रभावयत्युत्पादयतीति प्रभवः । सर्वभावप्रभवत्वमेव विशदयन्नाह ।। **सर्वमिति** ।। चेतोंशून् ज्ञानरश्मीन् जीवानित्यर्थः ।

**भाष्यार्थः** - प्रभवः सर्वभावानामित्यादौ विशेष्यानुक्तेर्व्याचष्टे ।। **प्रभव इति** ।। विष्णुश्चेत्प्रभवः तर्हि प्राणशब्दायोग इत्यत आह ।। **सर्वस्येति** ।।

## गूढकर्तृका टीकाटिप्पणी

**प्रभावयतीति** ।। प्रभव इत्यस्यान्तर्णीतण्यर्थत्वमभिप्रेत्येयं व्युत्पत्तिः प्रदर्शिता । सर्वभावानां प्रभवः उत्पादकः । इति सतां विनिश्चय इत्यनेनासतामन्यथानिश्चय इति लिख्यते । तत्प्रकारो विभूतिमित्यादिना स्पष्टीभविष्यति ।। **ज्ञानरश्मीनिति** ।। सर्वप्रणेतृत्त्वात् प्राणो भगवान् । ज्ञानाख्यरश्मियुक्तान् चेतनान् । पृथक् देवमानवदानवादिभेदेन । सर्वमचेतनम् । पृथक् महत्तत्वादिभेदेन जनयतीत्यर्थः ।

## भाष्यविवृतिः

एप योनिः सर्वस्य प्रभवाप्ययौ भूतानामित्यत्र मन्त्रः **प्रभवः सर्वभावानां इति** । तत्रायं भावः । एष योनिरिति वाक्ये सर्वस्यापि भगवान् कारणमिति प्रतिपादिते भवति चोदना । भवतु जडप्रपञ्चस्य योनिः जीवानां तु कथं योनिरिति । तत्परिहाराय व्याख्येयवाक्ये भूतानां प्रभावप्ययौ इत्यभ्यधात् । तत्र भूतशव्दस्य पञ्चमहाभूतपरत्वञ्च भाति । तन्निरासाय प्रमाणतयोदाहृतमन्त्रे जीववाचिभावशब्देन भूतशब्दस्य व्याख्यानमिति । अत एव अद्वैतः सर्वभवानामित्येतद्व्याख्यानपरप्रमाणभाष्ये "भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः "इत्यभ्यधात् । ततश्च सर्वभावानां सर्व-

जीवानां प्रभवः उत्पादको विष्णुः । भवतेरन्तर्णीतण्यर्थात्पचाद्यच् । इति सतां ब्रह्मादीनां निश्चयः असतां त्वन्यथा निश्चयः । उक्तमर्थं पिण्डीकृत्य अददर्शत् ।। **सर्वं जनयति प्राणश्चेतोंशूनिति** ।। सर्वस्य प्रणेतृत्वात् प्राणनामा नारायणः चेतोंशून् ज्ञानरश्मीन् जीवानित्यर्थः ।

## भाष्यार्थरत्नावलिः

एष योनिः सर्वस्येत्ययुक्तं । केश्चिच्छिवादेर्जगद्योनित्वोक्तेरित्याशङ्कां परिहरन् मंत्रः पठ्यते ।। **प्रभव इति** ।। अत्र सतामित्येतद् भावानामित्यस्य विशेषणं प्रतीयते । प्रभव उत्पादकश्च क इति नप्रतीयते। अतो व्याचष्टे।। **प्रभव इति** ।। उत्तरार्धादनुकृष्टस्य प्राणपदस्यार्थो विष्णुरिति । अन्यत्र रूढत्वात् कथं प्राणपदस्य विष्णुपरत्वमित्यतो निर्वक्ति ।। **सर्वस्येति** ।। हिशब्देन "ईशानःप्राणदः प्राण" इति प्रयोगं च सूचयति । ततश्चायं मंत्रार्थः। सर्वांतर्यामितया सर्वावस्थाप्रणेतृत्वात् प्राणनामा चतूरूपो विष्णुरेव सर्वभावानां पदार्थानां उत्पादक इति सतां विनिश्चयः । येऽन्यथा मन्यन्ते तेऽसंत इति भावः । एष योनिः सर्वस्य प्रभवः सर्वभावानां इत्यत्र जडानामेव सृष्टिरिति प्रतीयते । ज्ञानस्वरूपाणां चेतनानां तदयोगादित्यत उच्यते।। **सर्वमिति** ।। प्राणःप्रसिद्ध इति भ्रमं वारयितुमुक्तं।। **पुरुष इति**।। पुरुषशब्दश्च सहस्रशीर्षेत्यादौ नारायणे प्रसिद्धः । सर्वमचेतनं जनयति । पृथग्व्यतिरेकेण चेतोंशून् ज्ञानरश्मीन् जीवानपि सुरनरतिर्यगादिभेदेन पृथग्विधानिति वा। चैतन्यस्य नित्यत्वेपि ज्ञोऽत एवेत्युक्तरीत्या देहमानकृत विक्रियासद्भावाज्जनिरुपपद्यते इति भावः ।

## पदार्थदीपिका

एषयोनिः सर्वस्येत्यत्र प्रमाणत्वेन प्रवृत्तं प्रभव इति । ननु उत्तरार्धे प्राण इत्युक्तत्वात्कथं विष्णुरेवेत्युक्तमित्यत आह ।। **सर्वस्यहीति** ।।

## उपनिषत्

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ।।**

## भाष्यम्

**तां सृष्टिं बहुधा प्राहुर्ज्ञानिनोऽज्ञानिनस्तथा ।**
**विष्णुर्विकृतिमायाति महदादिस्वरुपिणीम् ।।**
**तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः ।**
**स्वप्नमायासरूपां च केचिदज्ञा जना विदुः ।।**
**अविकारस्य चिन्मात्रस्वेच्छयैवाखिलं जगत् ।**
**उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - भगवान्जगत्कारणं सन्निमित्तकारणमिति निरूपयिष्यंस्तेषां स्वरूपनिरूपणेनैव दुष्टत्वं मन्वानः पूर्वपक्षान्निरूपयति ।। **विभूतिमिति** ।। महदादित्वेन ब्रह्मादित्वेन च विविधभवनमिति यावत् ।

**भाष्यार्थः** - विभूतिं प्रसवमित्यादिना बहुधा सृष्टिर्निरूपिता । तत्र कः स्वपक्ष इति नज्ञायतेऽतो विवेचयंस्तद्वाक्यजातं सर्वं व्याचष्टे ।। **तामित्यादिना** ।। बहुधेत्युक्तमेव विशदयति ।। **विष्णुरिति** ।।

## गूढकर्तृका टीकाटिप्पणी

।। **तेषामिति** ।। पूर्वपक्षाणामित्यर्थः ।। **विभूतिमितीति** ।। अन्ये ब्रह्मपरिणामवादिनः । प्रसवं सृष्टिं ब्रह्मणो विभूतिं मन्यन्ते । अन्यैः विवर्तः प्रपञ्च इति वादिभिः। स्वप्नमायासरूपा बाह्यत्वादिस्वाप्नपदार्थैरैन्द्रजालिकैश्च सदृशेति विकल्पिता। प्रमाणं विना स्वमनीषयैव कल्पितेत्यर्थः। अयं भावः । अज्ञानं द्विविधम् । अविद्या मायाचेति । स्वाश्रयव्यामोहिनी अविद्या । स्वाश्रयाव्यामोहिनी माया । विवर्तवादोऽपि द्विविधः । अविद्याविवर्तवादो मायाविवर्तवादश्चेति । तत्र यथा स्वाप्नपदार्थः सुप्ताविद्योपादानकस्तद्वद्ब्रह्माविद्योपदानका ब्रह्मविवर्ता जगत्सृष्टिरित्यन्यैर्वादिभिः । यथा मायिक ऐन्द्रजालिकोऽर्थो मायानिर्मितो मायाविमायोपादानकस्तत्र तत्र वस्तुनि विवर्तः प्रतीयते तद्वद्ब्रह्ममायानिर्मिता सृष्टिरपीत्यपरैर्वादिभिः विकल्पितेति ।

## प्रकाशिका

प्रभवःसर्वभावानामिति प्रस्तावितस्वाभिमतसृष्टिं विविच्य दर्शयितुं पूर्वपक्षानाह ।। **विभूतिमित्यादिना** ।। विभूतिं विविधप्रपञ्चाकारेण भवनं महदादिजगदुपादानत्वमिति यावत् । अन्ये तत्त्वप्रमातुर्मत्तोऽन्ये । मन्त्रद्रष्टृ-ब्रह्मणः यदि स्वाभिमतेयं सृष्टिः स्यात्तर्हि मन्य इति ब्रूयान्नत्वन्य इति ततो ज्ञायते सर्वपक्षोऽयमिति । एवमुत्तरवाक्येऽपि द्रष्टव्यम् । विकल्पितेति विरुद्धतया स्वकपालादेव कल्पितत्वस्य विकल्पितपदमहिम्नैव लाभाच्च पूर्वपक्षत्वं ज्ञायते । अतो मायावाद्युक्तं ब्रह्मणो जगदुपादानत्वं जगतो मिथ्यात्वं च पूर्वपक्ष एवेति प्राग्भवे मध्वरूपस्य मन्त्रद्रष्टृब्रह्मणो हृदयम् ।

## भाष्यविवृतिः

सतां भगवानेव चेतनाचेतनप्रपञ्चस्य निमित्तमिति विनिश्चयः इत्यवोचत्। तर्ह्यसतां कथं निश्चयः कथं निराकरणमित्यतस्तत्पक्षान्निराकर्तुं तावदुप-न्यस्यति ।। **विभूतिमिति** ।। विभूतिं तत्तद्विविधभवनं महदादिस्वरूपां विष्णोः विकृतिं सृष्टिचिन्तका मन्यन्ते । तेह्यपण्डिताः। यतो ह्यन्य इत्यस्वरसमुदवीभवत् । निराकरणंच अन्ये अन्यैरित्यनेन अवेत। सिद्धा-न्तिपक्षे विनिश्चिता इत्युक्त्याच । सृष्टिः स्वप्नमायासरूपेत्यन्ये ।

## भाष्यार्थरत्नावलिः

भगवतो जगत्सृष्टिर्नाम केत्यतः संशयाङ्गभूतवादिविप्रतिपत्ति प्रदर्शन-पूर्वं सृष्टिस्वरूपनिरूपणपरत्वप्रतीतेः सृष्टृपूर्वपक्षः प्रदर्श्यते ।। **विभूतिमिति** ।। अत्र पृथिगित्यनुवर्तते । सृष्टिचिंतकाः प्रसवं पृथङ्मन्यंत इत्यंशं वादिविप्रतिपत्तिप्रदर्शनपरतया व्याचष्टे।। **तामिति** ।। विभूतिं प्रसवमिति । पूर्वपक्षप्रदर्शकवाक्ये अन्ये शाक्तेयाः विभूतिं लक्ष्मीं प्रसवकर्त्रीं मन्यंत इत्यन्यथा प्रतीयते । तदयुक्तं कालादित्यतः पूर्वं सृष्टिस्वरूपनिरूपण परत्वप्रतीतेः सृष्टृविचारस्याप्रसक्तत्वादित्यतो यथावद्व्याचष्टे ।। **विष्णुरिति** ।। ततश्च किं तत्राह ।। **तत्तदिति** ।। महदादिलक्षणं यद्विविधं तदात्मना भूतिः परिणाम एव सृष्टिरिति । अपंडितैः भास्करीयैः प्रोक्तेत्यर्थः ।

एतेनान्ये सृष्टिचिंतकाः सत्यत्यच्चाभवदिति वाक्यार्थत्वेन सृष्टिस्वरूपमन्यथाचिंतयन्तो विभूतिं महदादिरूपेण विविधभवनं प्रसवं सृष्टिं मन्यंत इत्यर्थ उक्तो भवति । विवर्तवाद्यभिमतसृष्टिस्वरूपं निरूपयत् स्वप्नमायेति वाक्यं व्याचष्टे ।। **स्वप्नेति** ।। सरूपां सृष्टिं स एतेनान्यैः संकरादिभिः । आन्तरी दुःखादिसृष्टिः आविद्यकत्वात् स्वाप्नसृष्टिसरूपा। बाह्या वियदादिसृष्टिः मायिकत्वादैन्द्रजालिकमायासृष्टिसरूपेति विकल्पिता विविधं कल्पिता । "शोकमोहौ सुखंदुःखं देहोत्पत्तिश्च मायया । स्वप्ने यथात्मनः ख्यातिः संसृतिर्नतु वास्तवी"त्यादि भागवतवचनाद्यर्थतया श्रुत्यादिविरुद्धाच कल्पितेत्यर्थ उक्तो भवति ।

## पदार्थदीपिका

सर्वंजनयतीत्युक्तं विष्णोर्जगदुत्पत्तिनिमित्तकारणत्वमेव स्पष्टयन्वादिनां पूर्वपक्षाननुवदितुं विभूतिं प्रसवमित्यादिको ग्रंथःप्रवृत्तः । तत्र विभूतिं प्रसवमित्येतद्व्याचष्टे।। **विष्णुरिति** ।। तत्तद्विविधभूतिः तत्तत्पदार्थाकारेण विविधभवनं । अपंडितैः भास्करैः । स्वप्नमायासरूपेत्येतद् व्याचष्टे ।। **स्वप्नेति** ।। स्वप्नसरूपां स्वप्नसृष्टिसरूपां । मायासरूपां ऐंद्रजालविद्यां अज्ञाजनाः मायिनः । "अनादिकालतोवृत्ताः समयाहि प्रवाहत" इत्युक्तत्वान्नात्र कश्चित्क्षुद्रोपद्रवः ।

## उपनिषत्

**इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ।।**

## भाष्यम्

पूर्णशक्तेः कुतो माया सार्वज्ञ्यात् स्वप्नवत् कुतः ।
सर्वदोषव्यतीतस्य विकारः कुत इष्यते ।।

तस्मादेवाविकारस्य विष्णोरिच्छावशादिदम् ।
यथार्थमेव सम्भूतमिति वेदवचोऽखिलम् ।।

केचित् कालत एवैतां सृष्टिमाहुरकोविदाः ।

**केचिद् रुद्राद् ब्रह्मणश्च प्रधानादिति चापरे ।।**

**विमूढाः सर्व एवैते यतो नारायणः परः ।**

**सर्वकर्ता सर्वशक्तिरेक एव च नापरः ।।**

**प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - सिद्धांतं निरूपयति ।। **इच्छेति** ।। इच्छामात्रं सृष्टिरिति सामानाधिकरण्येनानायासेनाविलंवेन सृष्टिर्भवतीति सूचयति । सिद्धांतज्ञानकातरं प्रति सिद्धांतं निरूप्य पुनरपि पूर्वपक्षं निरूपयति ।। **कालादिति** ।। कालचिंतका आभासतः कालविदः ।

**भाष्यार्थः** - ननु भगवतश्चिन्मात्रस्वेच्छया जगदुत्पद्यत इत्युक्तं निमित्तकारणत्वं चेत्पक्षः तर्हि तदितरपक्षाणां किं दूषणमित्यत आह ।। **पूर्णशक्तेरिति** ।। तत्वप्रदर्शने अशक्तस्य हि तत्प्रदर्शने मायोपादेया । पूर्णशक्तेः कुतो माया । अज्ञानां हि स्वप्नोऽस्यतु सार्वज्ञात्सर्वपदार्थज्ञानाभावात् अज्ञानाभावात्तत्सृष्टा सृष्टिः कुतो मायावत्स्वप्नवच्च । तस्मान्मायादि- पक्षाणां दुष्टत्वात् । कालात्प्रसूतिमिति वाक्यं व्याकुर्वंस्तदुपलक्षितपक्षांश्चाह ।। **केचिदिति** ।। सर्वकर्तृत्वं कुत इत्यत उक्तं ।। **सर्वशक्तिरिति** ।। प्रधानादेर्जगत्कर्तृत्वाभावः कुत इत्यत आह ।। **प्रधानेति** ।। तद्वशत्वंच प्रधानादेर्द्रव्यं कर्मचेत्यादिना सिद्धमिति भावः।

## गूढकर्तृका टीकाटिप्पणी

ननु कारणस्य कार्येण सामानाधिकरण्येनोक्तिः किमर्थेत्यत आह ।। **इच्छामात्रमिति** ।। केवलमिच्छापूर्विकैव । नोक्तप्रकारेण ब्रह्माविद्या मायोपादानकेत्यर्थः । सृष्टौ सृष्टिविपये विनिश्चिताःसम्यक् निश्चयवन्तः सज्जना इत्यर्थः । कर्तरि क्तः । प्रकर्षेण भवति शश्वदेकप्रकारेण वर्तत इति, प्रभवति समर्थो भवति इति, प्रकर्षेण भवति अनुभवति अखिलमिति व्युत्पत्तित्रयेण प्रभुपदस्य निर्विकारत्वपूर्णशक्तित्वसर्वज्ञत्वरूपार्थत्रयपरत्वात् प्रभुपदेनैव परिणामवादस्य अविद्याविवर्तवादस्य मायाविवर्तवादस्य च

निरासो बोध्यः ।। **सामानाधिकरण्येनेति** ।। एकविभक्त्यन्तपदवाच्यत्वरूपसामानाधिकरण्येनेत्यर्थः । ननु पूर्वपक्षमध्ये सिद्धान्तस्य निवेशः कुत इत्यत आह ।। **सिद्धान्तज्ञानकातरं प्रतीति** ।। प्रथमं तावत् सिद्धान्तं ज्ञास्यामि अनन्तरं पूर्वपक्षं वदेति त्वरया सिद्धान्तज्ञानाभिलाषावन्तं प्रतीत्यर्थः ।

ननु "कालः सर्वगुणोद्रेकादि"ति प्रमाणेन सर्वगुणोद्रेकत्वादिनिमित्तेन कालं कालशब्दवाच्यं परमात्मानं चिन्तयन्तीति कालचिन्तकाः सज्जनाः कालात् हरेः भूतानां पदार्थानां प्रसूतिं सृष्टिं मन्यन्त इत्यर्थप्रतीतेः कथमस्य पूर्वपक्षनिरूपकत्वमित्यतो कालचिन्तका इति पदमनूद्य व्याचष्टे ।। **कालचिन्तकाइति** ।। आभासतः कालविदः आपाततः प्रतीयमानजडकालादेव सृष्टिर्भवतीति जानन्ति । प्रमाणोक्तप्रकारेण कालशब्दवाच्यभगवतः सकाशात् सृष्टिर्भवतीति न जानन्तीत्यर्थः । अतस्तेषां मिथ्याज्ञानित्वाद्युक्तमेतस्य पूर्वपक्षप्रतिपादकत्वमिति भावः ।

## प्रकाशिका

अनायासेन स्वतन्त्रसाधनान्तरं विना स्वसङ्कल्पोत्तरकाले स्वेच्छयैव जगत्सृष्टिकरणादिच्छामात्रमित्युक्तम् । अस्ति ह्यतिसमर्थकार्वादिभिर्लीलयैव कृतप्रासादादिषु अस्येयं लीलैवेत्यादिकार्यकारणयोर्भेदव्यपदेशः तथाऽत्रापि। कथमन्यथा बाह्यजगन्निष्टसृष्टिरूपोत्पत्तेरन्तःकरणतया प्रागेव विद्यमानभगवदिच्छया सहैक्यम् ? सृष्टौ विनिश्चिताः विशेषेण निश्चितं निश्चयो येषां ते इति विनिश्चितपदेनैव सिद्धान्तत्वं सूचितम् ।

## भाष्यविवृतिः

अखिलाः प्राज्ञा ब्रह्मादयस्तु सत्यसृष्टावशक्तस्य मायासृष्टिदर्शनात् पूर्णशक्तेस्तु परमेश्वरस्य कुतोमायासृष्टिः, कुतश्च सर्वज्ञस्य स्वप्नवद्दृष्टिः कुतश्च सर्वदोषव्यतीतस्य विकाररूपा सृष्टिरिति मन्यमानाः प्रभोरविकारस्य विष्णोरिच्छामात्रमेव सृष्टिविषये विशिष्टनिर्णयवन्तो वदन्ति । सृष्टिरिति सृष्टिश्चोत्पत्यनुकूलव्यापारः, यदभाणीत् पाणिनिः सृजविसर्ग इति । ततश्च जगत् परमेश्वरेच्छामात्रेणैवोत्पद्यत इत्यफालीत् । केचित्

कालत एवंतां सृष्टिमाहुः तेऽकोविदाः । कालशब्दश्च कालब्रह्मरुद्रप्रधान-परः। तथाच द्वितीयस्कन्धतात्पर्ये "हरिश्च प्रकृतिश्चैव ब्रह्मवायू तथैवच । सुपर्णशेषरुद्राश्च शक्रः सूर्ययमावपि । अग्निर्यमानुजश्चैव कालशब्दोदिताः क्रमात्" इति ।

## भाष्यार्थरत्नावलिः

एवं प्राप्तस्य पूर्वपक्षद्वयस्य सयुक्तिकं प्रतिक्षेपपूर्वं स्वमतमुच्यते ।। **इच्छेति** ।। अत्र सृष्टेर्भगवदिच्छाभेदप्रतीतेः यथावद्व्याचष्टे।। **अविकारस्येति** ।। **इच्छामात्रमिति** ।। इच्छामात्रेणेच्छेयैवेत्यर्थः । इच्छामात्रमेव सष्टिरिति सामानाधिकरण्यन्तु घटादिसृष्टावायासो नापि इच्छानन्तरं विलम्ब इति सूचयितुमिति भावः । मात्रशब्दस्येच्छयैव नतु तत्परिणामतया विवर्ततयाच सृष्टिरित्यर्थ इति भावेनोक्तमविकारस्येति । जगद्भ्रमान-धिष्टानस्यचेति ग्राह्यं । नैय्यायिकादिरीत्येच्छाया भगवद्भिन्नत्वेन तस्य नकारणत्वमित्यत उक्तं ।। **चिन्मात्रेति** ।। चिन्मात्रत्वेन स्वरूभूतयेच्छयेर्थः विनिश्चिता विशिष्टनिश्चयवन्त इत्यस्य विशेष्यमुक्तं ।। **प्राज्ञाब्रह्मादय इति**।। "देवादीनांतु यज्ज्ञानं विज्ञानमि"त्युक्तेर्विशिष्टा योग्या ब्रह्माद्या लभ्यन्त इति भावः । मायामयी बाह्यसृष्टिरिति पक्षे दूषणं वक्तुं उपनिषदि प्रभोः समर्थस्येत्युक्तं तदभिप्रायमाह ।। **पूर्णशक्तेरिति** ।। "अशक्तः सर्वसृष्टौहि मायासृष्टिं वितन्वत"इत्युक्तरीत्या सत्यसृष्टावशक्ताः खलु मायया सृष्टिमिच्छन्ति । पूर्णशक्तेः कुतो मायोपादेया स्यादिति भावः। आन्तरी सृष्टिः स्वप्नवदाविद्यकीति पक्षंच दूषयितुं प्रभोरित्युक्तं । प्रकर्षेण भवत्यनुभवतीति प्रभुर्भवतेरनुभवार्थत्वात् । तथाच सर्वज्ञस्येति लभ्यत इति भावेन व्याचष्टे ।। **सार्वज्ञादिति** ।। नहि सर्वज्ञकृतसुखाद्यान्तरसृष्टिराविद्यकीति भावः । विकारपक्षं दूषयितुंच प्रभोरित्युक्तं । प्रकर्षेण निर्दुष्टत्वेन भवति सर्वदा वर्तत इति प्रभुरित्यर्थमभिप्रेत्य व्याचष्टे ।। **सर्वदोषेति** ।। वाक्यार्थमुपसंहारव्याजेन पिंडीकृत्याह ।। **तस्मादिति** ।। अविकारस्यचेत्य-न्वयः । इति वेदवच इत्यनेन विनिश्चिता इत्येतद्विशेषेण निश्चितं निश्चयो यैस्ते वेदाश्चेति वदन्तीति व्याख्यातं भवति ।

एवं जगत्सृष्टिरविवर्तरूपा ब्रह्मपरिणामरूपाचेति मतद्वयं निरस्य भगवन्निमित्तका सत्यरूपैवेति सिद्धान्तितं अधुना विष्णोरेवोक्त जगत्कर्तृत्व-निर्वाहाय पूर्वपक्षोपन्यासपूर्वं दूषणमुच्यते ।। **कालादिति** ।। "कालाद्भवन्ति भूतानि"इति वाक्यार्थतयोपक्रमाद्यपर्यालोचनदुर्वासनया कालस्य स्वातन्त्र्येण कारणत्वचिन्तकाः केचित्सर्वेषां ब्रह्मादिभूतानां कालात्प्रसूतिं मन्यन्त इत्यर्थः । उपक्रमादिविरोधान्नैषोर्थो युक्त इति भावः। कालग्रहणमुपलक्षणं मत्वा कालचिंतका इत्येतद्यथादूषणपरं स्यात्तथा व्याचष्टे ।। **केचिदित्यादिना** ।। अज्ञाः वेदार्थविचाराकुशलाः "वायुना वै गौतमसूत्रेणायंच लोकः परश्च लोक"इति श्रुतेः, सूत्रात् । "हिरण्यगर्भ" इत्यादेर्ब्रह्मणः । "ज्ञात्वाशिवं"इत्यादेः शिवात्। "प्रधानादिदमुत्पन्नम्" इत्यादेः प्रधानात् । "कर्मैवदेहं दैविकं मानुषंवा"इत्यादेः कर्मण इतिवार्थः । विमूढा उपपत्यादितात्पर्यलिंग विचाराक्षमाः । उपपत्तिमेवाह ।। **यतइतिं**।। मुखपदेन सूत्रकर्मादिग्रहणं ।

## पदार्थदीपिका

एवं पूर्वपक्षद्वयमभिधाय सिद्धांतज्ञानकातरं प्रति सिद्धांतं निरूयितुं प्रवृत्तमिच्छामात्रमित्यर्धर्चं व्याचष्टे ।। **अविकारस्येति** ।। हरेरितिशेषः । पूर्वपक्षस्वरूव्याक्रियैव निराक्रियेत्याशयेन पूर्वपक्षानुवादमात्रस्यैव कृतत्वात्त-दभिप्रेतं दूषणं दर्शयति ।। **पूर्णशक्तेरिति** ।। "अक्षमाः सत्यसृष्टौ हिमायासृष्टिं वितन्वते । अनंताचिंत्यविभवः कथं तामीहते हरिरिति" वच-नादित्यर्थः । **सार्वज्ञादिति** ।। स्वप्नस्याज्ञानकार्यत्वाद् भगवतश्च सार्वज्ञान्न स्वप्नवत्सृष्टिः। इदंच दूषणं स्वप्नमायासरूपेत्यनूदितमायिपक्षस्येति द्रष्टव्यं। विभूतिं प्रसवमित्युक्तभास्करपक्षं दूषयति ।। **सर्वदोषेति** ।। भगवत एव महदाद्याकारेण परिणामांगीकारे शुनकगर्दभादिपदार्थाकारेणापि विकार-प्राप्त्या दूषणापत्तेरितिभावः। एवं पूर्वपक्षद्वये दूषणमभिधाय प्रतिपादितस्य स्वपक्षस्य प्रमाणिकत्वं वदन्नुपसंहरति ।। **तस्मादिति** ।। वेदवचः "कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्य " इत्यादिवेदवचः । एवं सिद्धांतज्ञानकातरं प्रति सिद्धांतं निरूप्य पुनः

पूर्वपक्षं प्रतिपादयितुं प्रवृत्तं कालात्प्रसूतिमिति वाक्यं व्याकुर्वन् त दभिप्रेत-पूर्वपक्षांतराण्यपि दर्शयति ।। **केचिदित्यादिना** ।। मिथ्याज्ञानमूलत्वादेतानि मतान्यग्राह्याणीत्याशयेनाह ।। **विमूढा इति**।। यत एते सर्वेपि वादिनो विमूढाः मोहवंतोऽतस्तन्मतानि मिथ्याज्ञानमूलकानीत्याशयः । कुतस्ते विमूढा इत्यत आह ।। **यत इति** ।। प्रधानादीनामस्वातंत्र्यान्न जगत्कारण-त्वमित्याशयेनाह ।। **प्रधानेति** ।। प्रधानादेः "द्रव्यं कर्मच कालश्चे"त्यादिना नारायणवशत्वं प्रमितमिति भावः ।

## उपनिषत्

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।**
**देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहेति ।।**

**।। इति प्रथमः खण्डः ।।**

## भाष्यम्

**"तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः ।**
**अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः ।।**
**सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः ।।"**
**इति हरिवंशेषु ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - भगवतोजगत्सृष्टौ प्रयोजनसदसद्भावजिज्ञासायां सिद्धांतं विवक्षुः पूर्वपक्षावाह ।। **भोगेति**।। प्रलये सर्वाभावाद् भोगाभावेनालस्येन च भोगार्थं क्रीडार्थं च सृष्टिरिति मन्यंते । क्रीडा च भवंती स्वभाव एवेति सिद्धांतमाह ।। **देवस्येति** ।।

**।। इति श्रीमांडूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां खंडार्थे प्रथमः खंडः ।।**

**भाष्यार्थः** - भोगार्थं सृष्टिरिति वाक्यं पूर्वपक्षसिद्धांतविवेकाय व्याचष्टे ।। **तस्यापीत्यादिना** ।। तस्यापि सर्वशक्तित्वे प्रधानादीश्वरत्वेनान्यनिरपेक्ष-

स्यापि । विपश्चितस्तु साक्रीडा स्वभावोस्येत्याहुरिति योजना । विभोराप्तकामस्य पूर्णस्य ।

**।। इति श्रीमांडूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां**

**भाष्यार्थे प्रथमःखंडः ।।**

## गूढकर्तृका टीकाटिप्पणी

।। **सदसद्भावेति** ।। प्रयोजनमस्ति नवेति जीज्ञासायामित्यर्थः ।। **प्रलयइति** ।। भोगाभावेन भोगार्थमिति सम्बन्धः । आलस्येन निमित्तेन क्रीडार्थमिति च सम्बन्धः । प्रलये भोग्याभावात् भोगाभावेन अतृप्तस्य हरेर्भोगार्थं सृष्टिरित्यन्ये मन्यन्ते । अपरेतु प्रलये क्रीडासाधनाभावेनालस्यात् तत्परिहारमुद्दिश्य क्रीडार्थं सृष्टिरिति मन्यन्त इत्यर्थः ।। **क्रीडाच भवन्तीति** ।। जायमानाच क्रीडेत्यन्वयः ।। **देवस्येतीति** ।। एषः इच्छारूपः । इच्छामात्रमित्युक्तस्यंवाधिकविधानार्थं अनुवादोऽयम् । इच्छतेर्घञि गुणे एष इति रूपम् । अयं जगत्सर्जनव्यापारः । स्वभाव एव न प्रयोजनाशया कृतः । कुतः आप्तकामस्य अवाप्तसकलपुरूषार्थस्य हरेः कास्पृहा ? भोगाभिलाषः । न कापीत्यर्थः । उपलक्षणमेतत् । दोषदूरस्य हरेः क्वचालस्यमित्यपि बोध्यम् । एष इत्येतत् षष्ठी । सर्वेश्वरस्येत्यर्थः। देवस्यायं स्वभावः । आङुपसर्गादीश ऐश्वर्यइति धातोः (क्विप्प्रत्ययाद्) गुणे च छान्दसेच षत्वे एष इति रूपमित्यपि सम्प्रदायः । इतिशब्दो रूपत्रयनिरूपणसमाप्तौ ।

**।। इति प्रथमखण्ड व्याख्यानम् ।।**

## प्रकाशिका

क्रीडार्थं त्वित्येतत्पर्यन्तं पूर्वपक्ष एव । श्रुतौ भोगार्थं क्रीडार्थम् । द्वयोरपि पूर्वपक्षतयोक्तत्वात् कः सिद्धान्त इत्यत आह - स्वभाव इति । 'साच क्रीडा स्वभावोऽस्य' इति वदतः क्रीडार्थं न सृष्टिः, किं तु क्रीडाऽप्युन्मत्तनर्तनवत् स्वभाव एवेत्यभिसन्धिः । अत एव श्रुतिः "स्वभावोऽयम्"इत्याह। यथा वसन्तकाले कोकिलगानस्य न राजादिरञ्जनं

फलं, नापि स्वस्यापूर्वसुखोत्पत्तिः फलं । कण्ठशोषणरूपत्वात् । किन्तु चूताङ्कुरास्वादनजनितसुखोद्रेकेणैव । तथा भगवतोऽपि क्रीडाऽपि स्वाभाविक्येवेति भावः । इयांस्तु विशेषः, कोकिलस्य कण्ठशोषणेनेषदायासोऽपि सम्भावितः । भगवति तु सोऽपि नास्तीति । अत एव 'देवस्य' इत्युक्तम् । मोदेनैव हि दीव्यन् हि 'देवः' इत्युच्यते । तदुक्तं सूत्रकृता- "लोकवत्तु लीलाकैवल्यम्"इति । सूत्रे तुशब्देन लोकवदायासाभावं भगवति विशिनष्टि । दृश्यन्ते हि मोदाभावेऽपि स्वभावादेव वायोः पवनम् । जडत्वात्तस्य मोदो न चेदाप्तकामत्वाद्भगवतोऽपि सुतरां स नास्ति । अत एव "आप्तकामस्य"इत्याह श्रुतिः ।

**।। इति प्रथमः खण्डः ।।**

## भाष्यविवृतिः

इमां च सृष्टिं विष्णोरतृप्तस्य भोगार्थं इत्यन्ये । क्रीडार्थमित्यपरेऽनिपुणाः । मत्तगानादिवत् केवललीलैव देवस्य भगवतः एष इच्छामात्रमिति प्रकृता इच्छा तत्पूर्विका प्रवृत्तिः अयं सृष्ट्यादिविषयः ततश्च सृष्ट्यादिविषयेच्छादिपूर्वप्रवृत्तिरूपा क्रीडा देवस्य स्वभाव इत्यर्थः समपादि । अत एवहि भगवान् बादरायणः लोकवत्तुलीलाकैवल्यमिति । अत एव भाष्यकारोप्यनुव्याक्शसीत् । "देवस्यैष स्वभावोऽयामित्याह श्रुतिरञ्जसा । क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी । इति केवललीलैव निर्णीता प्रभुणा स्वय"मिति। इच्छायामिति भावेघञ् । अत एव गीताभाष्यटीकायां अयमेषः इयमिच्छा इति व्याचचक्षिरे चतुर्थे[१] । आप्तकामस्य अतृप्त्या कुतो विभोः स्पृहा । तदिदमभिप्रेत्य अभ्यधाद्भाष्यकारः प्रभवः सर्वभावानामित्यादिना", "कुतोऽतृप्त्या स्पृहा विभोः इति हरिवंशेष्वित्यन्तेन" ।

**।। इति प्रथमः खंडः ।।**

## भाष्यार्थरत्नावलिः

उपलक्षितं पूर्वपक्षान्तरमाह ।। **तस्यापीति** ।। कर्मादिभ्य उत्तमस्यापि विष्णोः केचिदनैपुणाः निपुणसम्बन्धि नैपुण्यं तदेव नैपुणं तद्रहिता

---

१. अध्याये इति शेषः ।

अनैपुणाः । "जनितोऽत विष्णोः"इत्यादि वाक्यार्थाकुशलाः कर्मादिवशात् सृष्टिमाहुरित्यर्थः । यथोक्तं "विष्णुर्येन दशावतारगहने क्षिप्तोमहासंकटे । तस्मैनमः कर्मणे"इति । जगत्सृष्ट्या भगवतः प्रयोजनसद्भावजिज्ञासायां पूर्वपक्षद्वयमुच्यते।। **भोगार्थमिति** ।। प्रलये भोग्याभावे भोगाभावाद्भोगार्थं सृष्टिरित्यन्ये । तदा क्रीडासाधनाभावेनालस्यात्तत्परिहाराय क्रीडार्थंसृष्टिरित्यपरे । अकोविदाः प्राहुरित्यर्थः ।

नन्विदं कथमज्ञानिमतं स्यात् "सयद्यदेवासृजत तत्तदत्तुमध्रियत । यदिहवा इममभिमंस्ये कनीयोऽन्नंभविष्यति" इत्यादौ भोगार्थं सृष्ट्युक्तेः । 'विहृतिं ममेच्छन्'इत्यादौ सिद्धान्तिभिरपि क्रीडार्थं सृष्ट्यंगीकाराच्चेत्यतः तद्वाक्यं व्याचष्टे ।। **तस्यापीति** ।। सर्वशक्तित्वेनान्यनिरपेक्षस्यापि विष्णोः अतृप्तस्यैव भोगार्थं आलस्यत्वप्राप्तव्यलाभेन तृप्त्यभावादालस्यतयेव क्रीडार्थं जगत्सृष्टिं केचिदनैपुणाः आहुरित्यर्थः । स्वमतमुच्यते । चशब्दस्तुशब्दार्थे । अपरे विपश्चितस्तु क्रीडार्थं सृष्टिरिंत्याहुरिति योजनामभिप्रेत्याह ।। **क्रीडार्थंत्विति** ।। विपश्चितस्त्विति सम्बन्धः । कथं पूर्वपक्षोऽनुमन्यत इत्यत उच्यते।। **देवस्येति** ।। अत्रैष इति परामर्शविषयो नप्रतीयते। पुनरयमितिचार्थं क्रीडेच्छया सृष्टिरित्यंगीकारात्कास्पृहेत्याक्षेपोपि नयुज्यत इत्यतो व्याचष्टे ।। **साचेति** ।। अंगीकृताचेत्यर्थः। विभोः पूर्णस्य। भूबहाविति धातोः । आप्तकामस्येति यावत्। अयमित्यस्य विपरिणामेनास्येति । तथाचास्य देवस्य एष अभ्युपगतसृष्ट्यादि लक्षणः क्रीडाविशेषः स्वभावः आप्तकामस्य तृप्त्या का क्रीडायां स्पृहेत्यर्थः । क्रीडैव । स्वतोनप्रयोजनं । नापिस्वप्रयोजनार्थं । येनातृप्त्या तदपेक्षास्यात्। किन्तु "सोऽयंविहार इहमे तनुभृत्स्वभावसंभूतये भवति"इत्युक्तन्यायेन परप्रयोजनमपेक्ष्यापि स्वस्य स्वभावभूतेति भावः । यद्वा 'इषुइच्छायां'इति धातोरयमेषो इयमिच्छा देवस्य स्वभावः सत्यकामस्य तत्रातृप्त्या कास्पृहेत्यर्थं मत्वा व्याचष्टे ।। **साचक्रीडेति** ।। साच क्रीडाविषयिणी स्पृहा । अस्य देवस्य स्वभाव इत्यादि योजना ।

**।। इति प्रथमः खंडः ।।**

## पदार्थदीपिका

ननुभगवत इच्छापूर्वकं स्रष्टत्वमुक्तं । तदयुक्तं । प्रयोजनापेक्षया स्रष्टृत्वेऽपूर्णत्वापत्तेस्तदनपेक्षया स्रष्टृत्वे मंदत्वापत्तेरित्याशंकायां सिद्धांतं विवक्षुरत्रापि पूर्वपक्षं वक्तुं भोगार्थं सृष्टिरित्यादिवाक्यं प्रवृत्तं । तद्व्याचष्टे ।। **तस्यापीति** ।। अविद्यमाननैपुणाः केचिद्वादिनो विष्णोः सृष्टिं विष्णुकर्तृकां सृष्टिमतृप्तस्यैव विष्णोर्भोगार्थमाहुरित्यन्वयः । केचिद्रामानुजाः । प्रलये एकस्यैव विष्णोः सत्वेन तस्याप्यालस्यप्राप्त्या तत्परिहाराय क्रीडार्थं सृष्टिमाहुः । क्रीडायाः आलस्यपरिहारार्थतायाः लोके दर्शनादिति योज्यं । एवं पूर्वपक्षावभिधाय "लोकवत्तुलीलाकैवल्यमि"ति सिद्धांतं वक्तुं दैवस्यैषःस्वभावोयमिति वाक्यं प्रवृत्तं । तद्व्याचष्टे ।। **तुविपश्चित इति** ।। विपश्चितस्त्वितिसंबंधः । आहुरिति वर्तते । एषोऽयमित्यस्यार्थः सा च क्रीडेति। जगत्सर्जनादिरूपा क्रीडा व्यापार इत्यर्थः । भोगार्थं क्रीडार्थं सृष्टिरिति मतद्वयनिराकरणाय प्रवृत्तस्याप्तकामस्य का स्पृहेत्यस्यार्थः **कुत इति** । विभोरतृप्त्या जातभोगार्थं स्पृहा। आलस्यपरिहारार्थं जातक्रीडार्थं वाकुतः। नकुतोऽपीत्यर्थः । ।। खं १ ।।

**ततश्चायंखंडार्थः** ।। मंडूकरूपिणा वरुणेन विश्वादिचतूरूपी नारायणः स्तूयते ।। **ओंमित्यादिकया समग्रोपनिषदा** ।। ओंमितिप्रणवप्रतिपाद्यं यत्तदेतदक्षरं नाशरहितं ब्रह्मैव। तदिदं प्रणवप्रतिपाद्यं ब्रह्म गुणपूर्णत्वात्सर्वमित्युच्यते । अत्रोंकारवाच्यतयोक्तमक्षरं नप्रसिद्धाकाराद्यक्षरं । किंतु यत्पूर्णं परब्रह्मरूपाक्षरं तदेवोंकारवाच्यमिति प्रणवस्याभिधेयमुक्त्वा तस्य भगवति प्रवृत्तौ निमित्तमसाधारणलक्षणं कथ्यते ।। **तस्येत्यादिना** ।। तस्य भगवतः उप समीपे वाचकत्वेन स्थितस्योंकारस्य विशेषेणाख्यानं व्याख्यानं प्रवृत्तिनिमित्तं कथ्यत इत्यर्थः। तस्योपपन्नं व्याख्यानं क्रियत इति वा। अक्षरं भूतं भवद्भविष्यदिति व्याख्यानमित्यन्वयः । अत्र कालत्रयसंबंधित्वं नार्थः। तस्य जीवादिसाधारण्याद् । यच्चान्यत् त्रिकालतीतमित्यनुवादासंभवाच्च । अतः कालत्रयेऽप्येकरूपत्वमेवाभिप्रेतं ।। १ ।।

सर्वमित्यत्रोक्तं पूर्णत्वमन्यत्रातिव्याप्तं किं नस्यादिदं सर्वमिति पूर्वं निरवधारणमुक्तत्वात् इत्याशंकायां नेत्याह ।। **सर्वमोंकार एवेति** ।। ओंकारवाच्यं ब्रह्मैव सर्वं पूर्णमित्युक्त्याऽन्यस्य पूर्णत्वं निवार्यतेऽतो नातिप्रसंग इति भावः । एवं भूतं भवत्यादिनोक्तं त्रिकालातीतत्वं अन्यस्यापि किंनस्यात् । पूर्वं निरवधारणमुक्तत्वादित्यतो नेत्याह ।। **यच्चान्यत् त्रिकालातीतं तदप्योंकार एवेति** ।। ओंकारवाच्यभगवत एव त्रिकालातीतत्वमित्युक्त्याऽन्यस्य त्रिकालातीत्त्वं निवार्यतेऽतो नातिप्रसंग इति भावः । ननु चेतनप्रकृत्यादेरपि त्रिकालातीतत्वात्पुनरतिव्याप्तिरित्यत उक्तं ।। **अन्यदिति** ।। तथाच प्रकृत्यन्यत्वे सति कालत्रयकृतविकारशून्यत्वमेवेह प्रवृत्तिनिमित्तभूतं लक्षणतयाभिप्रेतं अतोऽव्याकृताकाशकालवर्णानां प्रकृत्यभिमन्यमानानां व्यावर्तितत्वान्न कुत्राप्यतिप्रसंग इति भावः । देहाभिमानकृतोच्चनीचत्वादिरूपविकारसद्भावान्न जीवेष्वतिव्याप्तिः । मुक्तानामपि पूर्वं संसारावस्थायां कालत्रयकृतविकारसद्भावेन कालत्रयकृतविकारशून्यत्वाभावान्न तेष्वतिव्याप्तिरित्यपि द्रष्टव्यं ।

ननु भगवत एव पूर्णत्वमुक्तं किं तत्र प्रमाणमित्यतस्तत्सूचयन्नाह ।। **सर्वंह्येतदिति** ।। एतद्ब्रह्मोंकारप्रतिपाद्यमक्षराख्यं परं ब्रह्म सर्वं गुणपूर्णमित्येतत् हि 'पूर्णमद' इत्यादि श्रुतिप्रसिद्धमित्यर्थः । ननु श्रियो ब्रह्मादिजीवानां चास्वातंत्र्यदर्शनात्तत्र स्थित्वा तेषामादानादिकर्ता कश्चन वक्तव्यः । तथाच तस्यापि पूर्णत्वत्रिकालातीतत्वयोरवश्यं स्वीकर्तव्यत्वादवधारणमयुक्तमित्यतः सोऽपि भगवानेवेत्याह ।। **अयमात्माब्रह्मेति** ।। श्र्यादिषु स्थित्वा योऽयमात्मा "यच्चाप्नोति यदादत्त"इति वचनादादानादिकर्ता प्रतीयतेऽनुमानेन सह्योंकारवाच्यो विष्णुरेवेत्यर्थः ।। २ ।।

एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमभिधायेदानीं प्रणवांशाकारोकारमकारनादप्रतिपाद्यानां विश्वतैजसप्राज्ञतुरीयाणामुपास्तिं अकारः प्रथममात्रेत्यत्र वक्तुमादौ प्रस्तावयति ।। **सोयमात्मेति** ।। यः श्रीब्रह्मादीनामादानादिकर्तृत्वेनोक्तः सोऽयमात्मोंकारवाच्यो देहस्थो भगवान् चतुष्पात् चत्वारः पादा अंशाः यस्यासौ चतुष्पादित्यर्थः । ननु के ते चत्वारः पादाः कानिच

तेषां स्थानानि कश्चतेषां व्यापारः किंविधंच रूपं किंच तेषां भोग्यमित्यतो नांतःप्रज्ञमित्यादिना तुरीयस्य वक्तुं विश्वतैजसप्राज्ञानां स्थानादीनि तावदाह ।। **जागरितस्थान इत्यादिना तृतीयःपाद इत्यंतेन** ।। तत्र विश्वस्य स्थानादिकं दर्शयति ।। **जागरितस्थान इत्यादिना** ।। जागरितं स्थानं दक्षिणाक्ष्यादिरूपं यस्यासौ तथोक्तः । बहिःप्रज्ञः बहिष्ठं वस्तु प्रज्ञापयति बाह्यपदार्थविषयकसंवित्तिनिर्मातेति यावत् । सप्तांगः द्वौ पादौ चत्वारो हस्ता हस्तिकर इति सप्तांगवान् । एकोनविंशतिमुखः तत्राष्टादशमुखानि पुमाकाराणि मध्यमंतु गजाकारमिति शेषः । स्थूलभुक् स्थूलान्बाह्यान् शुभान्विपयान् जीवेंद्रियद्वारा भुंक्ते इत्यर्थः ।। वैश्वानरः विश्यते ज्ञानेन प्रविश्यत इति व्युत्पत्त्या ज्ञानविषयीभूतस्थूलं विश्वशब्दोक्तं भोक्तृत्वेन तत्संबंधीवैश्वः अनाशान्नरः वैश्वश्चासौ नरश्चेति वैश्वानरः विश्व इतियावत् प्रथमःपादःप्रथमांशः ।। ३ ।।

एवं विश्वस्य स्थानादिकं प्रतिपाद्य तैजसस्य प्रतिपादयति ।। **स्वप्नस्थान इत्यादिना** ।। स्वप्नमनोरूपं स्थानं यस्यासौ तथोक्तः । अंतःप्रज्ञः अंतस्थितसंस्कारमयपदार्थान् प्रकर्षेण ज्ञापयतीत्यर्थः । सप्तांग एकोनविंशतिमुख इति पूर्ववद्व्याख्येयं । प्रविविक्तभुक् जाग्रत्पदार्थानुभवजन्यवासनोपादानकत्वेन तद्रूपत्वात्स्वप्नस्थितं वस्तु जाग्रत्पदार्थविलक्षणत्वात्प्रविविक्तमुच्यते । तद्भुंक्ते नदनुभवजन्यभोगवानित्यर्थः। तैजसो द्वितीयःपादो द्वितीयोंशः।
।। ४ ।।

एवं तैजसस्य स्थानान्युक्त्वा प्राज्ञस्यापि दर्शयितुमुत्तरो ग्रंथः । तत्र प्राज्ञस्य सुपुप्तस्थान इति सुषुप्तं स्थानं कथ्यते । तत्सुषुप्तं स्थानं कीदृशमित्याशंकायां लक्षणोक्त्याऽदौ तन्निरूपयति ।। **यत्रेति** ।। यत्र यस्यामेवावस्थायां सुप्तः अज्ञानावृतः मन आदींद्रियाणां उपरतत्वाज्जीवस्वरूपकालाज्ञानसुपुप्त्यवस्थासुखव्यतिरिक्तं कंचन पदार्थं नपश्यति कंचन कामं काम्यं च नकामयते नचस्वप्नं पश्यति तत्सुषुप्तं भावे क्तः । सुषुप्तिरिति यावत् । सुपुप्तं हृदयाकाशरूपं स्थानं यस्यासौ तथोक्तः । एकीभूतः प्रत्यहं विश्वतैजसाभ्यमेकीभावस्यापाद्यमानत्वेनैकीभूत इत्युच्यते । प्रज्ञानघन

एव अत्राग्न्याहितादिवद्घनप्रज्ञान इति विपरीतसमासः। एवकारस्य बुद्ध्या विवेकेन घनशब्देनान्वयः । तथाच घनं अज्ञानयुक्तं उपलक्षणमेतत् । कालसुषुप्त्यवस्थासुखयुक्तं जीवस्वरूपमेव प्रज्ञापयतीति प्रज्ञानघनः । आनंदमयः पूर्णानंदस्वरूपः । आनंदभुक् विषयभोगं विनाप्यभिव्यक्तकेवल-स्वरूपभूतानंदभुक्त्वादानंदभुक् । तेन विश्वतैजसयोः व्यावृत्तिः । तयोः स्थूलांतरविषयभोगेनानंदोक्तेः । हीत्येतदुभयं विशेषानंतशक्तिभ्यां उपपन्नमिति प्रसिद्धिं सूचयति। चेतोमुखः अत्र मुखशब्दः सर्वदेहोपलक्षकः। ज्ञानरूपं मुखं शरीरं यस्यासौ तथोक्तः । यद्वा मुखोमुख्यः । उत्तमइतिया-वत् । "मणिर्मुखं प्रधानं चेत्युत्तमस्यवचोभवे"दिति वचनादुत्तमत्वं चेह पूर्णत्वमभिप्रेतं। तथाच चेतसा ज्ञानेन मुखःपूर्णइत्यर्थः । एतादृशः प्राज्ञः तृतीयः पादः तृतीयोंशः । आनंदमयत्वंचेतोमुखत्वंच यत्प्राज्ञस्य कथितं तदितररूपत्रयेपि बोद्धव्यं ।। ५ ।।

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य नांतःप्रज्ञमित्यादिना तुरीयम-हिमानं पृथग्वक्तुं चतुर्णामपि महिमानं युगपदादावाह ।। **एषइत्यादिना** ।। एष चतूरूपो भगवान्सर्वेषामीश्वरः । एषः सर्वज्ञः सर्वांतर्यामी । एषः सर्वस्य योनिःकारणं । एतदेव विशदयति भूतानां प्रभवाप्ययौ हियस्मात् । चतूरूपोपेताद्धरेः सकाशाद् भवत इति ।। ६ ।।

सलिलेश्वरः स्वोक्तदार्ढ्याय ब्रह्मदृष्टान्मंत्रान्प्रमाणत्वेन वक्तुं प्रतिजानीते ।। **अत्रैतइति** ।। अत्र मदुक्ते जागरितस्थान इत्याद्यर्थे । एते वक्ष्यमाणा ब्रह्मदृष्टा मंत्राः । प्रमाणतया भवंतीत्यर्थः। विश्वो बहिःप्रज्ञः तैजसोंतःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्यत्र मंत्रं पठति ।। **बहिरिति** ।। बहिःप्रज्ञ इत्याद्युक्त-रीत्या स्पष्टार्थं । एक एव भगवान् विश्वादिरूपेण त्रिधा बहिःप्रज्ञत्वादिप्रकारत्रयोपेतत्वेन च स्मृत इत्यर्थः ।। ७ ।।

जागरितस्थानः स्वप्नस्थानः सुपुप्तस्थान इत्युक्तार्थे मंत्रं पठति ।। **दक्षिणेति** ।। हृदि हृदयस्थे आकाशे त्रिधा स्थानत्रयवत्त्वेन देहे व्यवस्थित इत्यर्थः ।। ८ ।।

स्थूलभुक्प्रविविक्तभुगानंदभुगित्युक्तार्थे मंत्रं पठति ।। **विश्वइति** ।। स्थूलभुगित्याद्युक्तार्थं । त्रिधा प्रकारत्रयेण भोगं विश्वादीनां ।। ९ ।।

तत्रैवमन्त्रांतरं पठति ।। **स्थूलमिति** ।। स्थूलं विश्वं तर्पयते । तैजसं प्राज्ञमित्युभयत्र तर्पयत इत्यनुवर्तते । आनंदमानंदः । तृप्तिं विश्वादीनां ।। १० ।।

जागरितादिस्थानेषु विश्वादिरूपो भोक्ता स्थूलादिरूपं तद्भोज्यं चेत्युभयं सर्वथा ज्ञेयमित्याशयवान् तद्वेत्तुः फलमाह।। **त्रिष्विति** ।। "तेजः स्वरूपंच गृहं प्राज्ञैर्धामेति गीयते" इत्यभिधानादत्र धामशब्दो गृहापरपर्यायस्थानवाची । तथा च त्रिषु दक्षिणाक्षिमुख इत्यादिनोक्तेषु जागरितादिषु धामसु स्थानेषु यो भोक्ता विश्वोहि स्थूलभुगित्यादिना प्रकीर्तितो विश्वादिः तस्य यत् स्थूलादिकं भोज्यं स्थूलं तर्पयत इत्यादिना कीर्तितं एतदुभयंच यो वेद स भुंजानोऽभ्यवहारादिकं कुर्वाणोपि नलिप्यते । अहं भोक्ता ममेदं भोज्यमित्यभिमानरहितो भवति। विश्वादिरूपस्य हरेरेव भोक्तृत्वज्ञानादित्यर्थः। ११।

एष योनिः सर्वस्येत्यत्र मंत्रं पठति ।। **प्रभवइति** ।। चतूरूपो हरिरेव सर्वभावानां चेतनाचेतनपदार्थानां प्रभवः उत्पादक इति निश्चयरूपं ज्ञानं सतामेव । असतां त्वन्यथेति भावः । एतदेव विवृणोति ।। **सर्वमिति** ।। सर्वस्य प्रणेतृत्वात्प्राणः । पुरिशेतेऽसौ पुरुषो विश्वादिचतूरूपोहरिः सर्वमचेतनं स्वरूपेण जनयति । चेतोंशून् ज्ञानरश्मियुक्तान् चेतनान् जीवान् पृथग्जडवैलक्षण्येन । देहद्वारा जनयतीत्यर्थः ।। १२ ।।

भगवान्न मृदादिवदुपादानकारणं किंनाम निमित्तमेवेति जनयतीत्यनेन सूचितं । तदेवेच्छामात्रं प्रभोस्सृष्टिरित्यनेन स्पष्टयिष्यन् आदौ वादिन। पक्षान् तेषां स्वरूपव्याक्रियैव निराक्रियेति मन्यमानोऽनुवदति ।। **विभूतिमित्यादिना** ।। केचित्सृष्टिचिंतकाः सृष्टिस्वरूपनिरूपणे दक्षत्वाभिमानवंतो भास्कराः । विष्णोर्या विभूतिः महदादिरूपेण विविधभवनरूपा तामेव प्रसवं जगदुत्पत्तिमाहुः । अयं पक्षः अविकारतया श्रुत्यादिप्रसिद्धस्येश्वरस्यैवैतादृशविविधभवनांगीकारे हीनत्वादिदोषप्राप्त्याऽयुक्तइति हृदयं । अन्यैः प्रच्छन्नबौद्धैर्मायिभिरेषा सृष्टिः स्वप्नमायासरूपा स्वाप्नपदार्थसृष्टिसदृशी

ऐंद्रजालिकमायासदृशी वा न यथार्थेति विकल्पिता निश्चितेत्यर्थः । अयमपि पक्षः "पूर्णशक्तेः कुतो माया सार्वज्ञात्स्वप्नवत्कुतः । "याथातथ्य-तोर्थान्व्यदधात्" "अशक्ताः सत्यसृष्टौ हि माया सृष्टिं वितन्वते । अनंताचिं-त्यविभवः कथंतामीहतेहरिः" "वैधर्म्याच्च न स्वप्नदिवदि" त्यादि श्रुतिस्मृतिसूत्रविरुद्धत्वादुपेक्ष्यः ।। १३ ।।

सिद्धांतं निरूपयति।। **इच्छेति** ।। प्रभोः अविकरिणो मायातीतस्य हरेः सकाशाद्या सृष्टिः अखिलस्यापि जगतः सा इच्छामात्रं इच्छामात्राधीनेति सृष्टिविषये यथार्थनिश्चयवंतो ब्रह्मादयः प्राहुः । अनेन ब्रह्मणो जगज्जन्मा-दिकर्तृत्वमेव सिद्धांत इत्युक्तं भवति। एवं सिद्धांतज्ञानकातरं प्रति पूर्वपक्ष-मध्ये सिद्धांतमभिधाय पुनः पूर्वपक्षान्निरूपयति ।। **कालादित्यादिना** ।। कालस्यैव सर्वोत्तमत्वध्यातारो भूतानां कालादेवोत्पत्तिं मन्यंते । उपलक्षण-मेतत् । रुद्रचिंतकाः ब्रह्मचिंतकाः प्रधानचिंतकाः भूतानां प्रसूतिं रुद्रादेरेव मन्यंत इत्यपि द्रष्टव्यं । एते पक्षा अयुक्ता एव कालप्रधानयोर्जडत्वेन कर्तृत्वायोगात् । रुद्रस्य पत्युरसामंजस्यादित्युक्तन्यायेन दोषित्वावगमात् । ब्रह्मणोप्येकोनारायण आसीन्नब्रह्मेत्यादिना प्रलयेऽभावावगमेन जगत्कर्तृत्वा-योगेन ते वादिनो मूढा इति द्रष्टव्यं । अतो नारायण एव सर्वकर्तेति पक्षः श्रेयानित्याशयः ।

ननु भगवतः इच्छामात्रेणैव यत्स्त्रष्टृत्वमुक्तं तदयुक्तं । प्रयोजनापेक्षया स्त्रष्टृत्वेऽपूर्णत्वापत्तेः । तदनपेक्षया स्त्रष्टृत्वे मूर्खत्वापत्तेरित्यतोऽत्रापि सिद्धांतं विवक्षुः पूर्वपक्षावाह ।। **भोगार्थमिति**।। अतृप्तस्यैव विष्णोर्भोगार्थं भोगाख्यप्रयोजनाय सृष्टिरित्यन्ये प्राहुः । प्रलये सर्वजगदभावेनैकस्यैव सतः ईश्वरस्यालस्यप्राप्तेस्तत्परिहाराय क्रीडार्थं सृष्टिरित्यपरे रामानुजाः मन्यंत इत्यर्थः । क्रीडायाः आलस्यपरिहारार्थतायाः प्रसिद्धेरिति भावः । तत्रापि सिद्धान्तमाह ।। **देवस्येति** ।। देवस्यैषोऽयं जगत्सर्जनादिरूपोव्यापारः क्रीडारूपत्वात्स्वभाव एव न तेन प्रयोजनापेक्षेति भावः । यथोक्तं "लोकवत्तुलीलाकैवल्यमि"ति । ननु भोगार्थं क्रीडार्थं वा सृष्टिः कस्मान्न स्यादित्यत आह ।। **आप्तकामस्येति** ।। आप्तकामस्य पूर्णकामस्य हरेः

अतृप्तिप्रयुक्ता भोगार्थं स्पृहा आलस्यपरिहारार्थं वा जातक्रीडार्थं च स्पृहा इच्छा का ? नकापीत्यर्थः। तथाच भगवत्सृष्टेः स्वप्रयोजनाभावेपि परप्रयोजनापेक्षत्वमस्त्येवेति भावः । यथोक्तं "सोयंविहार इह मे तनुभृत्स्वभावसंभूतये भवती"ति । व्याख्यातंचैतद्वाक्यं सुधायां। तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञापनार्थेत्युक्तं भवतीति ।। १५ ।।

।। इति मांडूकखंडार्थे प्रथमः खंडः ।।

## उपनिषत्

### द्वितीयः खण्डः

**नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनम् । नप्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ।। १ ।।**

### भाष्यम्

"विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।
मुक्तानां प्राप्यरूपोऽसौ व्यवहारे नदृश्यते ।।

सम्यक्समाहितानां तु प्राप्तानां षोडशीं कलाम् ।
अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम् ।।

अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च ।
बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च ।।

यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता ।
एतत् सर्वं तुरीयेण रूपेण न करोत्यजः ।
सर्वज्ञानप्रदश्चापि मुक्तस्यैव तुरीयकः ।।" इति ब्रह्माण्डे ।

"अमुक्तस्य त्वदृश्यत्वात् षोडशीं वा कलामृते ।
तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः ।।

विनामुक्तिं ततस्तेनाव्यवहार्य इतीरितः ।
जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम् ।।

अलक्षणस्तद्राहित्यादचिन्त्यस्तत एव च ।
तत एव ह्यनिर्देश्यश्चिदानन्दैकलक्षणः ।।
मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः ।
एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः ।।
तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः ।
प्रत्ययो ज्ञानरूपत्वात् सार आनन्दरूपतः ।।
प्रपञ्चो विस्तृतेर्विष्णुः शम आनन्दरूपतः ।
उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः ।।
प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद्यतः ।
प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान् प्रभुः ।।
निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः ।
अन्यथाप्रत्ययो द्वैतं शमयेत् तं यतो हरिः ।
अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषोत्तमः ।।"इति माहात्म्ये ।
"अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपता ।
इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते ।।"
इति सङ्कल्पे ।

"स आत्मा स विज्ञेयः" इति सोऽयमात्मा चतुष्पादिति चतुर्धा विभक्त उच्यते, उपसंहारार्थम् । "सोऽयमात्माऽध्यक्षरम्" इति पृथगारम्भात् ।

"विश्वादिरूपो यस्त्वात्मा स विज्ञेयो मुमुक्षुभिः ।
निर्विशेषोऽपि भगवांश्चतुर्धा समुदीरितः ।।" इति प्रत्यये ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - एवं विश्वादीनां त्रयाणां स्वरूपं निरूप्य तुरीयस्य स्वरूपं निरूपयति ।। **नांतःप्रज्ञमित्यादिना** ।।

**भाष्यार्थः** - तुरीयस्य तु मूले स्थानानुक्तेस्तदुक्तिपूर्वं नांतःप्रज्ञ इत्यादि वाक्यं अप्रतीतेर्नप्रज्ञमिति विरोधप्रतीतेश्च व्याचष्टे ।। **विष्णुरित्यादिना** ।। नासिकामूलमारभ्य द्वादशांगुलांते मस्तकमध्य इति केचित् । मस्तकमध्य-

मारभ्योपरि द्वादशांगुलप्रदेश इत्यन्ये । अदृष्ट इत्यत्र सर्वथादृष्ट इत्यन्यथा-प्रतीतिं निवारयन् व्याचष्टे ।। **मुक्तानामिति** ।। संसारव्यवहारे यथा विश्वादयोनुमितिदृश्या न तथा दृश्यते । तर्हि तुरीयो मुक्तानां सर्वथा दृश्य इत्यत उक्तं सम्यक् समाहितानां अपरोक्षदृशामिति । तेषामपि सर्वदा दृश्यते किं नेत्युक्तं क्वापीति । क्वचिद्दर्शनकारणमाह ।। **प्राप्तानामिति** ।। षोडशीं कलां प्राप्तानां पंचदशकलानुसंधानं विना जीवस्वरूपं जानतामिति। नांतःप्रज्ञं नबहिःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नोभयतःप्रज्ञं नाप्रज्ञमिति षडपि पदानि क्रमेण व्याचष्टे ।। **अंतरित्यादिना** ।। पूर्वं विश्वादिवत्संसारव्यवहा-रेऽनुमित्यदृश्यत्वाददृष्टमिति व्याख्यान इदानीममुक्तस्य साक्षाद्दृगविषयत्वाद-दृष्टमिति सापवादमर्थांतरमाह ।। **अमुक्तस्येति** ।। षोडशीं कलामृते अमु-क्तस्यादृष्टत्वाद्वा तुरीयोऽदृष्ट इत्युक्त इति योजना । तद्विषयवाग्व्यवहार-दर्शनात्कथमव्यवहार्यस्तुरीय इत्यतस्तव्द्याचष्टे ।। **ग्रहणादेरिति** ।। लक्षण-राहित्यप्रतीतिं निवारयन् लक्षणपदं व्याकुर्वन् अचिंत्यत्वादौ कारणंचाह ।। **जाग्रदिति** ।। योजनातु लक्षणमनुमापकं हि । तत्किमत्र जाग्रदादि-प्रवृत्तिः । तद्राहित्यादलक्षणः । तत एव तत्प्रतीत्यभावादेवाचिंत्यः । तत एवाचिंत्यत्वादेवानिर्देश्यो निर्देष्टुमशक्यः शब्दागोचर इति यावत् ।

ननु लक्षणरहितत्वादलक्षण इति किं नस्यात् इत्यत आह ।। **चिदानं-देति** ।। लक्षणांतरमाह ।। **मुक्तस्येति** ।। अप्रतीतेरैकात्म्यप्रत्ययसारपदं व्याचष्टे ।। **एक इति** ।। अनेनैकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति विग्रह उक्तो भवति । प्रपंचस्योपशमः संहारकृदित्यन्यथाप्रतीतेर्व्याचष्टे ।। **प्रपंचइति** ।। तर्हि सार इत्यनेन पुनरुक्तिरित्यत उपशब्दार्थकथनपूर्वकं परिहरति ।। **उत्कृष्टेति** ।। उपशब्दः उपशमशब्दः। उच्छम इतीरयादिति-चेन्न। उच्छब्दार्थत्वादुपशब्दस्य प्रपंचोपशममित्यस्यार्थमाह ।। **प्रपंचमिति** ।। सारादिशब्दार्थत्वेनैकार्थत्वप्रतीतिं निवारयञ्छिवशब्दार्थमाह।। **निर्दुःखेति** ।। नविद्यते द्वैतं भिन्नं यस्मात्तदद्वैतमित्यन्यथाप्रतीतिं निवारयन्व्याचष्टे ।। **अन्यथेति** ।। वस्त्वपेक्षयान्यथाप्रत्ययोद्वैतमिति कथं शब्दलभ्यमित्यतस्तव्द्यु-त्पाद्य दर्शयति ।। **अपेक्ष्येति** ।। योजना तु वस्तुयाथार्थ्यं वस्तुतत्वमपेक्ष्य

यान्यस्वरूपता सा द्वित्वं द्वीत्युच्यते । द्वितीयेन प्रकारेणेतं ज्ञातं द्वीतं । अत्र ज्ञानार्थः क इत्यत उक्तमिण्गताविति। तथाच तज्ज्ञानं द्वितीयप्रकारेण ज्ञातस्य ज्ञानं द्वैतमिति। सआत्मा सविज्ञेय इति तुरीयस्यैव विज्ञेयत्वमुच्यत इति प्रतीतिं वारयति ।। **स आत्मेति** ।। किमर्थमत्रोच्यते स इत्यत आह ।। **उपसंहारार्थमिति** ।। चतुष्पादोपसंहारार्थमित्यर्थः ।

ननूपसंहारार्थमिति कथमुच्यते सोऽयमात्माध्यक्षरमित्यादिनापि निरूप्यमाणत्वादित्यत आह ।। **सोयमिति** ।। पृथगारंभादकारादिवाच्यत्वनिरूपणार्थारंभात् । ननु स आत्मासविज्ञेय इति तुरीयस्यैव विज्ञेयत्वमुच्यत इत्येवार्थः किं नस्यादित्यत आह- **विश्वेति**। ।इंद्रार्जुनादिवद्रूपेषु निर्विशेषोपि।

## गूढकर्तृका टीकाटिप्पणी

तुरीयाय नमः ।। **नान्तःप्रज्ञमित्यादिनेति** ।। अज्ञानमिथ्याज्ञानाभ्यामन्तःस्थान् वासनामयपदार्थान् प्रज्ञापयतीत्यन्तःप्रज्ञः । सन भवतीति नान्तःप्रज्ञः । तैजसः स्वप्ने जीवमज्ञानभ्रमाभ्यां बन्धयति । तुरीयस्तु तादृशो न भवतीत्यर्थः तम् । द्वितीयान्तपदस्य सर्वस्य विष्णोश्चतुर्थं पादं मन्यन्ते ज्ञानिन इत्यनेनान्वयः ।। **नबहिःप्रज्ञम्** ।। अज्ञानमिथ्याज्ञनाभ्यां बाह्यान् पदार्थान् प्रज्ञापयतीति बहिःप्रज्ञः । सनभवतीति नबहिःप्रज्ञः । विश्वो जाग्रदवस्थायां जीवमज्ञानमिथ्याज्ञानाभ्यां बन्धयति '। तुरीयस्तु तादृशो न भवतीत्यर्थः ।

विश्वतैजसयोरज्ञानमिथ्याज्ञानाभ्यां जीवबन्धकत्वेऽपि विशेषं "कार्यकारणबद्धौता"विति सम्मतिश्लोकव्याख्यानावसरेऽनुपदमेव प्रतिपादयिष्यामः ।। **नोभयतः प्रज्ञम्** ।। उभयतः बाह्याभ्यन्तरपदार्थान् प्रज्ञापयत इत्युभयतःप्रज्ञौ । तौ न भवतीति नोभयतःप्रज्ञः । यत्र बाह्यशब्दादिकं जानन् स्वाप्नर्थांश्च पश्यति साऽवस्था उभयज्ञानशब्दिता । विश्वतैजसावुभयज्ञानावस्थायां जीवस्योभयविधं ज्ञानं जनयतः । तुरीयस्तु न तथेत्यर्थः । इयांस्तुविशेषः । पूर्वं विश्वतैजसयोर्भिन्नकालीनव्यापारनिषेधस्तुरीयेकृतः । अत्रतु तयोरेवैककालीनव्यापारनिषेधस्तस्मिन् क्रियत इति ।

।। **नप्रज्ञानघनम्** ।। प्राग्वद्विपरीतसमासः । घनमेव सुप्त्यवस्थापन्नजीवमेव प्रज्ञापयतीति प्रज्ञानघनः । उपलक्षणमेतत् । कालमज्ञानादिकं च प्रज्ञापयतीत्यपि ज्ञेयम् । स न भवतीति नप्रज्ञानघनः । प्राज्ञः सुषुप्त्यवस्थायां जीवस्वरूपकालाज्ञानादीनि विना आत्मानं परांश्च न प्रज्ञापयति । तुरीयश्चैतादृशो न भवतीत्यर्थः ।। **नप्रज्ञम्** ।। जीवं परमात्मस्वरूपमेव प्रज्ञापयतीति प्रज्ञः स न भवतीति नप्रज्ञः । प्राज्ञः असम्प्रज्ञातसमाध्यवस्थायां मानसवासनामयं ध्येयं वस्तुजीवस्वरूपं च विना आत्मानं परांश्च न प्रज्ञापयति । तुरीयश्च एतादृशव्यापारवान् न भवतीत्यर्थः । इयांस्तु विशेषः । नप्रज्ञानघनमित्यनेन प्राज्ञकर्तृकसुप्त्यवस्थाव्यापारनिषेधस्तुरीये कृतः। नप्रज्ञमित्यनेन प्राज्ञस्यैव समाध्यवस्थाव्यापारनिषेधस्तस्मिन् कृतइति। किन्तर्हि निर्व्यापारमेव चतुर्थरूपमित्यतस्तुरीयस्य व्यापारमाह ।। **नाप्रज्ञमिति** ।। न प्रज्ञः प्रज्ञापक एव "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत" इति न्यायात् । मुक्तानां स्वस्वयोग्यसर्वज्ञानप्रदानरूपव्यापारकर्तेत्यर्थः । अत्र नान्तःप्रज्ञमित्यादिपदत्रयेण विशवतैजसाभ्यां नप्रज्ञानेत्यादिपदद्वयेन तुरीयव्यापारप्रतिपादकनाप्रज्ञमित्यनेन च प्राज्ञाद् वैधर्म्यं प्रतिपादितमिति ज्ञेयम् ।

।। **अदृष्टम्** ।। जाग्रदाद्यवस्था केनचित् प्रवर्त्या अवस्थात्वान्निगडावस्थावदित्यनुमानेन यथा विश्वादिरूपत्रयमनुमेयं न तथा चतुर्थरूपमित्यदृष्टमित्युच्यते न चाश्रयासिद्धिः । साक्षिप्रत्यक्षसिद्धत्वात् । अमुक्तदृष्ट्यगोचरत्वाद्वा अदृष्टमित्यर्थः ।। **अग्राह्यम्** ।। संसारिणां हस्तादिभिर्ग्रहणाद्यविषयत्वादग्राह्यम् । अत एवाव्यवहार्यमित्युच्यत इति हेतुहेतुमद्भावेनान्वयः । आदानादि रूपव्यवहाराविषयमित्यर्थः ।। **अलक्षणम्** ।। लक्षणं नामानुमापकम् । जाग्रदादिप्रवृत्तिरूपानुमापकराहित्यादेवालक्षणम् । न सर्वथानुमापकराहित्यात् । मुक्त्यवस्थाप्रवृत्तिरूपानुमाकसद्भावात्। नापि लक्षणराहित्यात् । अनन्तलक्षणप्रतिपादकश्रुतिविरोधात् । न च जाग्रदादिप्रवृत्तेः विश्वाद्यनुमापकत्वे हेतुत्वमेव भवेत् । न पक्षत्वम् । धूमादौ तथा दृष्टत्वादिति वाच्यम् । बुद्ध्यादेः शब्दादेश्चात्माद्यनुमापकत्वेऽपि हेतुत्वादर्शनात् ।

ननु जाग्रदादिप्रवृत्या विश्वादिरिव मुक्तिप्रवृत्या तुरीयः कुतो नानुमेय इति चेत् । तुरीयस्यानुमेयत्वं वदन् प्रष्टव्यो जायते । किंमुक्तैरनुमेयइति आहोस्वित् संसारिभिरिति । नाद्यः "भिद्यते हृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः। क्षीयन्तेचास्यकर्माणि तस्मिन् दृष्टे परावर" इति प्रमाणेन तेषां संशयाभाव-स्यैव प्रमितत्वात् । सन्दिग्धार्थ एव न्यायावतारात् । न द्वितीयः । मुक्त्यवस्थाया अप्रसिद्धत्वात् । श्रुत्या तत्सिद्धिरिति चेत् तर्हि तुरीयोऽपि श्रुत्या सिद्धइति कुतस्तस्यानुमेयत्वमिति ।। **अचिन्त्यम्** ।। जाग्रदादि प्रवृ-त्तिरूपानुमापकाभावेन तत्प्रतीत्यभावाज्जाग्रदाद्यवस्थाप्रवर्तकत्वेन यथा विश्वादिरूपत्रयं चिन्त्यं न तथा तत्प्रवर्तकत्वेन चिन्त्यमित्यर्थः ।। **अव्यपदे-श्यम्** ।। निर्देष्टुमशक्यम् । अचिन्त्यत्वादेवैतदवस्थाप्रवर्तकत्वेनोपदेष्टु-मशक्यमित्यर्थः । उपदेशस्य उपदेष्टव्यादिज्ञानसाध्यत्वात् । प्राक् आदाना-दिप्रवृत्तिलक्षणव्यवहाराविषयत्वमुक्तम् । इदानीमभिवदनलक्षणव्यवहारा-विषयत्वमिति भेदः ।। **ऐकात्म्यप्रत्ययसारम्** ।। एकः सर्वप्रधानः आत्मा गुणपूर्णः । एकश्चासावात्मा चैकात्मा । एकात्मैवैकात्म्यम् । सर्वप्राधान्य-गुणपूर्णत्वस्वरूपः । अथवा एकः सर्वप्रधानस्वरूपः । आत्मा गुणपूर्णस्वरूपः । पूर्ववत् कर्मधारयः । एकात्मैवैकात्म्यम् । स्वार्थे ष्यञ् आकारलोपश्च । प्रत्ययः ज्ञानस्वरूपः । सार आनन्दस्वरूपः । ऐकात्म्य-श्चासौ प्रत्ययश्चासौ सारश्चेति विग्रहः ।

।। **प्रपञ्चोपशमम्** ।। प्रपञ्चश्चासावुपशमश्चेति कर्मधारयः । प्रपञ्चः विस्तृतः । पचि विस्तार इति धातोर्नुम् । देशतः कालतो व्याप्त इत्यर्थः । न चात्मशब्देन गतार्थता । तत्र गुणतो व्याप्तत्वस्यैवोक्तत्वात् । उपशमः उत्कृष्टानन्दरूपः । 'उपोऽधिकेसमीपेचे'ति वचनात् । "शर्मशान्ति सुखानिचे"ति वचनाच्च शमशब्दस्य शान्तिशब्दपर्यायत्वात् । सारमित्युक्त्या प्रतीतजीवसाम्यनिरासायोपशममित्युक्तिः । देहबन्धाज्ञानाद्यनिष्टप्रपञ्चं उपशमयति नाशयतीति वा प्रपञ्चोपशमः । निर्दुःखसुखरूपत्वाच्छिवम् । अद्वैतम् । द्वैतशब्देनान्यथाज्ञानमुच्यते । न भवति मिथ्याज्ञानं यस्मात् सोऽद्वैतः । मिथ्याज्ञानाजनकत्वमित्यर्थः। नविद्यते मिथ्याज्ञानं

यस्मात्सोऽद्वैतः । मिथ्याज्ञाननाशक इत्यर्थो ज्ञेयः । द्वैतशब्दस्य मिथ्याज्ञानार्थकत्वमेतद्भाष्यटीकाव्यख्यानावसरे स्पष्टं प्रतिपादयिष्यामः । एतादृशं तुरीयं चतुर्थं मन्यन्ते । सोऽयमात्मा चतुष्पादिति प्रतिज्ञातं विश्वतैजसप्राज्ञतुरीयाख्यपादचतुष्टयं सपरिकरं निरूप्येदानीं चतुष्पादात्मावश्यं ज्ञातव्य इत्युपसंहरति ।। **सआत्मेति** ।। यः सोऽयमात्माचतुष्पादिति चतुर्धा विभक्तः परमात्मा स उक्तप्रकारेण मुमुक्षुभिर्विज्ञेयः ।

## प्रकाशिका

'नप्रज्ञं' विश्वादिवद् बहिरन्तरुभयतो वा जीवं न प्रज्ञापयतीत्यतः प्रज्ञं नेत्युच्यते ।। 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेनातिशयेन मुक्तान् प्रज्ञापयतीत्यतस्सर्वथाऽप्रज्ञमपि नेति नाप्रज्ञमित्युच्यते । एवं च भिन्नविषयत्वान्न पदयोर्मिथो विरोध इति ज्ञेयम् । अलक्षणं जाग्रत्प्रवर्तकत्वादिलक्षणरहितम् । अत एवाचिन्त्यं संसारिभिरचिन्त्यम् । अव्यपदेश्यं जगत्प्रवर्तकत्वादिना विश्वादिवद् व्यवहारायोग्यम् । सर्वथा व्यपदेशागोचरो नेत्याह - मुक्तस्येति ।। एकः प्रधानः । आत्मा परिपूर्णः । एकश्चासावात्मा चैकात्मा । प्रधानस्सन् परिपूर्ण इत्यर्थः । तस्य भावः ऐकात्म्यम् । एकत्वे सति पूर्णत्वस्वभाववानित्यर्थः ।

ओङ्कारार्थनिरूपणपरेऽस्मिन् ग्रन्थे जीवस्य नप्रतिपाद्यता । "एष सर्वेश्वरः"इत्यादिना सर्वेश्वरत्वादेरुक्तत्वाच्च। एवं च विश्वादयोऽपि भगवदवतारा एव । अत एव, जीवस्य स्वस्यैव विश्वाद्व्यवस्थायामैकात्म्यप्रत्ययसारत्वं नास्ति, किन्तु तुरीयावस्थायामेवेत्यैक्यवादिनां दुराशाया अपि नात्रावकाशः । अस्माकं तु तुरीये प्रोक्तं सर्वेश्वरत्वे सति पूर्णत्वाख्यमैकात्म्यं ज्ञानरूपत्वाख्यं प्रत्ययत्वमानन्दरूपत्वाख्यं सारत्वं च सकलभगवदवतारेष्वपि समम् । तस्मादेकत्रोक्तेरन्यत्र नास्तीति नाभिप्रायः । किन्त्वेकस्मिन् अन्नपात्रे पक्वीभूततण्डुलानां मध्ये एकतण्डुलस्य पाके स्पर्शेन गृहीतेऽन्यत्रापि पाकानुमानवत् सर्वावतारेष्वपीदृग्रूपतानुमानार्थं तुरीये ऐकात्म्यप्रत्ययसारत्वाद्युक्तिरिति ज्ञेयम् ।

अद्वैतमन्यथाप्रत्ययाख्यद्वैतरहितम् । ऐक्यप्रतिपादकत्वे अद्वैतपदस्यैका-

त्म्यप्रत्ययसारमित्यनेन पुनरुक्तता स्यात् । किं चैकस्मिन् देहे जीवस्याप्येकत्वेन कथं विश्वादिभेदेन चतूरूपत्वम् । अवस्थाविशेषेण चतुष्ट्वे चतुर्लक्षोत्तराशीतिलक्षयोनिषु परिवर्तमानस्यैकस्यैव जीवस्य चतुर्लक्षोत्तराशीतिलक्षरूपता च स्यात् । तत्र सर्वत्रैकस्यैव परिवर्तमानत्वेनैकतायां कथमेकस्यैवात्रापि चतुष्ट्वम् ? अतो यत्किञ्चिदेतत् ।

## भाष्यविवृतिः

अथ तुरीयं निरूपयति । नान्तःप्रज्ञं नस्वप्नप्रदर्शकं नबहिःप्रज्ञं जाग्रद् बोधाजनकं नोभयतःप्रज्ञं बहिःशब्दादिकं जानन् स्वप्नं यदा पश्यति सावस्था उभयज्ञानशब्दिता तदकर्तारमिति यावत् । युगपद्बाह्यस्वाप्नपदार्थज्ञानाजनकमित्यवयवार्थः । उभयत इति सार्वविभक्तिकस्तसिः द्वितीयार्थे। ननु प्रज्ञानघनं घनस्य प्रज्ञानं तमाद्यावृतस्य जीवस्य प्रज्ञापकं नभवति। विग्रहवैपरीत्येन विपरीतसमासः । नप्रज्ञं समाधिज्ञानाप्रदं मुक्तस्यैव सर्वज्ञानप्रदम्। अदृष्टं अमुक्तस्य अदृश्यम्। अमुक्तस्यापि पञ्चकलानुसन्धानदशायां षोडशीकलानुसन्धानदशायां समाध्यवस्थायां तुरीयो दृश्यः । तादृशावस्थानापन्नस्य त्वदृश्यम् । अत एव "मुक्तनां प्राप्यरूपोसौ व्यवहारे न दृश्यते । सम्यक् समाहितानांतु प्राप्तानां षोडशीं कलाम्। अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम्"। इत्यनेन तथा "अमुक्तस्य त्वदृश्यत्वात् षोडशीं वाकलामृते। तुरीयोऽदृष्ट"इत्युक्त इत्यनेनच व्याक्शासीत् । अव्ययवहार्यं मुक्तिंविना ग्रहणादेरगोचरो यतस्तेनाव्यवहार्यम् । जाग्रादादिप्रवृत्तिर्हि लक्षणमनुमापकं तद्राहित्यादलक्षणम् । तत एवाचिन्त्यं तत एवानिर्देश्यमैकात्म्यप्रत्ययसारं एकः प्रधानः आत्मा पूर्णत्वं प्रधानं पूर्णत्वं अस्य स्वरूपमित्यर्थे ष्यञ् । ज्ञानरूपत्वात्प्रत्ययः । आनन्दरूपत्वात्सारः । ऐकात्म्यश्चासौ प्रत्ययश्चासौ सारश्चेति विग्रहः ।

प्रपञ्चो विस्तृतिरूपत्वाद्विष्णुः, पचिविस्तार इति धातोः पचाद्यच् । आनन्दरूपत्वाच्छमः सचोत्कृष्ट इत्युपशमः । उत्कृष्टानन्दत्वज्ञापनायैवमुपशब्दः प्रयुक्तः । देहबन्धाख्यप्रपञ्चं यतस्तुरीय उपशमयेद् अतो वा प्रपञ्चोपशमः । निर्दुःखानन्दरूपत्वाच्छ्रुतौ शिवशब्दः श्रुतः । वातं गतं

दुःखमस्मादिति वं निर्दुःखं, शं सुखं, "तृतीयोऽतिशये इति अकारस्येकारः, शिश्चासौ वश्चेति शिवः । अद्वैतं वस्तुतत्त्वमपेक्ष्य यान्यस्वरूपता सा द्वित्वं द्विशब्देनोच्यते । अत एवाविश्वसोन कर्तव्य इत्यर्थे द्वैतं न कुर्वीथा इति व्यवहरन्ति लौकिकाः । तथाच द्वाभ्यामविद्यमानप्रकारेण इतं ज्ञातं द्वीतं भावे क्तप्रत्ययः । द्वीतमेव द्वैतं स्वार्थिको अण् । न विद्यते द्वैतमन्यथाप्रत्ययो यस्मात् सोऽद्वैतः । इतमित्यत्रचेण्गताविति धातुः । सच ज्ञानार्थो गत्यर्थानामवगत्यर्थात्वात् । अत एव महाभाष्ये बहुगणेति सूत्रे "भवान् ग्राम्यं पांसुरपादं अप्रकरणज्ञमागतं ब्रवीतु, गोपालकमानय, कञ्जमानयेति उभयगतिस्तस्य भवती"त्यभ्यधुः ।

स आत्मा सविज्ञेय इति तुरीयस्यैव विज्ञेयत्वमुच्यत इति माचावगाः । किंतु सोऽयमात्मचतुष्पादिति चतुर्धाविभक्त एवोच्यत इत्युपसंहारार्थम् । कथमुपसंहारार्थमित्युच्यते सोऽयमात्माध्यक्षरमित्यादि अध्येष्य[1]ग्रन्थेन सोऽयमात्मा चतुष्पादित्यादिनोक्तार्थस्य निरूपणात् माचवोवोचं सोऽयमात्माध्यक्षरमिति चतूरूपं नारायणं अनूद्य तदंशानां मकारोकारमकारादिवाच्यत्वाभिधानाय प्रकारणान्तरारम्भात् विश्वादिरूपो यस्त्वात्मेति चतुर्णामपि मुमुक्षुविज्ञेयत्वेन तुरीयमात्रस्येह विज्ञानाभिधानायोगाच्च ।

## भाष्यार्थरत्नावलिः

### अथ द्वितीयः खंडः

एवं विश्वादीन्निरूप्य तुरीयस्य स्वरूपं निरूप्यते । **।नान्तःप्रज्ञमित्यादिना** ।। तुरीयस्य मूलस्थानानुक्तेः तदुक्तिपूर्वं विश्वादिनां त्रयाणां आद्यखंडे तुरीयस्य द्वितीयखंडे निरूपणं किमर्थं कृतमिति शंकांपरिहरति ।। **विष्णुरिति** ।। "नासिकामूलमारभ्य द्वादशांगुलान्ते मस्तकमध्य इति केचित् । मस्तकदेशमारभ्योपरि द्वादशांगुलप्रदेश इत्यन्ये" इति व्यासतीर्थीये । तत्राद्यः स्वपक्षइति भाति । द्वितीयस्तु प्राचीनटीकापक्ष एव । तदुक्तं नारायणपंडिताचार्यकृतप्राचीनटीकायां "शिरोमध्यादुपरिभागे द्वादशांगुलप्रदेशान्ते"इति । तथाच विश्वादीनां त्रयाणां देहान्तर्गतत्वादस्य बहिष्टत्वात्तद्विशेषसूचनार्थं

---

१ [illegible]ध्यमाण इति पाठेन भाव्यमितिभाति ।

खंडान्तरमितिभावः । प्रयोजनान्तरमाह ।। **मुक्तानामिति** ।। नपुनः प्राज्ञादयइव सुप्त्यादौ प्राप्यर्इति भावः । किञ्चासौ व्यवहारे नदृश्यते । सांसारिकव्यवहारे विश्वादयोऽनुमितिदृश्याः । कार्यलिंगसद्भावात् । नतथा तुरीयः संसारे तत्कार्याभावादितिभावः । किञ्च व्यवहारे संसारे विश्वादयः प्रथमापरोक्षदृश्याः अयंतु न तथा दृश्यते । किंतु समाहितानां समाधिं कुर्वतां अपरोक्षदृशां रूपान्तरमपरोक्षतः पश्यता दृश्यते । तेपामपि सर्वदा-दृश्यते किं नेत्याह ।। **क्वापीति** ।। क्वचिद्दर्शनमाह ।। **प्राप्तानामिति** ।। "शरीरं जायते तेषां षोडश्या कलयैवतु । नित्योपाधिरेव षोडशीकला"इति गीताभाष्यतट्टीकयोरुक्तेः । षोडशीं कलां स्वरूपान्तःकरणाख्यां प्राप्ताना-मित्यर्थः । बाह्यान्तःकरणोपरमेण केवलं साक्षाद्भोगावस्थां तुरीयसंज्ञितां प्राप्तानामित्यर्थः । स्पष्टं चैतत्तत्वप्रदीपे । "केवलचैतन्येनेक्षणमसंप्रज्ञात-समाधिस्थस्य योगिनोपि भवति । साहि तुरीयावस्थानामे"ति ।

"नान्तःप्रज्ञं नबहिःप्रज्ञं प्रज्ञानघनं नप्रज्ञं नोभयतःप्रज्ञं" इति पञ्चपदानि व्याचष्टे ।। **अन्तरिति** ।। ज्ञानमिति बुद्ध्या विवेकेन सर्वत्र सम्बध्यते । अन्तर्वासनामयस्वप्नपदार्थज्ञानं तैजसकार्यं । बहिर्वासनामयजाग्रदर्थज्ञानं विश्वकार्यं । सौप्तं सुप्तिभवमविद्यावृतात्मज्ञानं प्राज्ञकार्यं । अप्रयत्नाखंड-स्मरणलक्षणं समाधिरूपं ज्ञानं देहाभिमानाभावन्मनसा हरिमात्रप्रतिस्मृतेश्च प्राज्ञतैजसोभयकार्यं । समाध्यवस्थापरिपाकदशायां प्रवृत्तमीश्वरापरोक्षज्ञानं मानसतैजप्राज्ञोभयकार्यं । वृत्यन्तरविलोपात् । ईश्वरांशे मनःप्रवृत्तेश्च । शुद्धसाक्षिरूपं चेत्प्राज्ञकार्यं । यस्यामवस्थायां बहिः शब्दादिकं जानन् तथा अन्तःस्वप्नंच पश्यन् भवति वर्तते । साऽवस्था उभयज्ञानशब्दिता तज्ज्ञानं विश्वतैजसोभयकार्यं । एवं मूर्च्छावस्थायां भवद्दुःखानुसन्धानंतु तदतिरिक्त सर्वविपयोपरमात् । प्राज्ञकार्यं दुःखांशे मनस उपरमाभावात् । तैजसकार्यं चेत्युभयकार्यं शास्त्रे प्रसिद्धं । मरणावस्थाप्यनेन व्याख्याता । वासनामयस्य वस्तुनो मनसाऽवलोकनलक्षणं ध्यानं । मनोरथश्च स्वप्नवत्तैजसकार्यम् । अन्तर्ज्ञानानन्तर्भूतं खंडस्मरणलक्षणं धारणं अखंडस्मरणलक्षणं ध्यानंच जाग्रदवस्थाभावित्वादवासनामयविपयत्वाद् गंगामात्रादिस्मरणवद्विश्वकार्यं

बहिर्ज्ञानान्तर्भूतं । परोक्षज्ञानसंततिर्हि ध्यानमित्युक्तं । ध्यानंतु शास्त्राव-मर्शरूपमेव । तच्च शब्दलिंगकरणकमिति विश्वकार्यमवगन्तव्यमित्येतत् सर्वं तुरीयेणरूपेण नकरोत्यज इत्यर्थः ।

ननु षोडश्या कलया प्रवृत्तेतासंप्रज्ञातसमाध्यवस्थाहि तुर्यावस्था । तत्रच तुरीयः प्रवर्तकइति कथमेतत् सर्वं तुरीयेण रूपेण करोतीत्युच्यत इतिचेन्न । तुरीयसाक्षात्कारस्तदा भवतीति तुरीयनामकत्वमवस्थायाः नतु तुरीयस्य पेरवर्तकत्वादित्यभ्युपगमात् । "सर्वज्ञानप्रदश्चापि मुक्तस्यैव तुरीयकः" इत्यादेरिति ज्ञेयं । उपनिषदि नोभयतः प्रज्ञमित्यस्यान्तर्बहिरित्युभयत इति प्रतिपत्तिसौकर्याय नबहिःप्रज्ञमित्यनन्तरं पठितत्वेपि स्वतन्त्रावस्थोक्त्यनन्तरं उभयावस्था वक्तव्येति भावेन नप्रज्ञमित्यतःपरं व्याख्यानं । तर्हितुरीयस्य किंकार्यमित्यतः प्रवृत्तं नाप्रज्ञमिति पदं व्याचष्टे । "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः" इति न्यायमनुसृत्य सर्वविषयत्वमतिशय इति भावेन ज्ञानस्य विशेषणमुक्तं ।। **सर्वेति** ।। अदृष्टपदं सर्वथा दृश्यत्वप्रतीतिं निवारयन् व्याचष्टे ।। **अमुक्तस्येति** ।। तर्हि तदुपासाविधिवैय्यर्थं उपास्ते-र्दर्शनार्थत्वादित्यतः अपवादमाह ।। **षोडशीमिति** ।। वाशव्दोवधारणे । नित्योपाधिनेक्षणावस्थां तुरीयसंज्ञामृते अवस्थितेरदृश्यत्वादित्यर्थः ।

अव्यवहार्यत्वं शवेदव्यवहाराविषयत्वमिति प्रतीयते तदयुक्तं । तुरीय इति व्यवहारविषयतेवादित्यतः असंव्यवहार्यत्वमेवाव्यवहार्यत्वं नतु शब्दागोचरत्व-मिति। तदुपपादकतया ग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमिति पदानि व्याचष्टे ।। **ग्रहणादेरिति** ।। ग्रहणमनुमाने धर्मितयोपादानं । लक्षणं प्रवृत्यादि-लिङ्गं । चिन्ताऽनुमितिः । व्यपदेश इदमित्थमेवेति निर्धारणोक्तिर्वा तेषामगोचर इत्यर्थः । ननु जक्षन् क्रीडन् रममाण इत्यादिश्रुत्युक्त प्रवृत्तिल-क्षणकार्यविषयत्वं। अत एव तथानुमितिव्यपदेशविषयत्वं चास्त्येवेत्यत उक्तं विनामुक्तिमिति । ततश्च किं तत्राह ।। **यत इति** ।। यत एवं विनामुक्तिं प्रवृत्याद्यहेतुतयाऽनुमानाद्यविषयस्ततोऽसंव्यवाहार्यत्वाभिप्रायेणाव्यवहार्य इतीरित इत्यर्थः ।

ननु मौक्तप्रवृत्तिलक्षणलिंगेनेदानीमनुमितिविषयत्वादलक्षणत्वाद्युक्तिरयुक्तेति शंकां परिहरन् सर्वथा लक्षणाभावपरत्वप्रतीतिं वारयन्व्याचष्टे ।। **जाग्रदादीति** ।। विश्वादेरिति शेषः। तद्राहित्याज्जाग्रदादिलक्षणानुमापक-राहित्यादेवालक्ष्यः । नतु सर्वथानुमापकराहित्यान्नापि लक्षणशून्यत्वात् । तत एव तादृशलिंगाभावादेवाचिन्त्यः तत्कारणत्वेन मननाविषयः। तत एव जिज्ञसाविषयत्वादेवेदमित्थमिति निर्देष्टुं निर्धारयितुं वक्तुं वा शक्यः । इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनमिति वचनात् । नन्वलक्षणमित्य-स्यासाधारणधर्मपरत्वं किंन स्यात् । कुतोऽनुमापककार्याभावपरत्वं तथात्वेनाकार्यमात्रभावपरत्वं किं न स्यात् किं कार्यविशेष जाग्रदादि लिङ्गपरत्वग्रहणेनेति शंङ्काद्वयं क्रमेण परिहरति।। **चिदानन्देत्यादिना**।। सर्वैरेकात्म्यभावं गतं चैतन्यमात्रमित्यन्यथाप्रतीतेरैकात्म्यप्रत्ययसारपदं व्याचष्टे ।। **एक इति** ।। "एके मुख्यान्यकेवलाः" इत्यभिधानेषु । "एकः प्रधान उद्दिष्टः"। "यच्चाप्नोति यदादत्ते" इत्यादौ "आप्नोति सर्वान्गुणान्"इति आत्मेति "पूर्णत्वादात्मा श्रुतः" । ततश्च किमित्यतो व्याचष्टे ।। **तदेवेति** ।। तदेव एकशब्दप्रवृत्तिनिमित्तं प्रधानत्वं आत्मशब्द-प्रवृत्तिनिमित्तं । पूर्णत्वं च एकात्मन इदमिति व्युत्पत्या ऐकात्म्यं यद्यस्मात्तदैकात्म्यं प्रधानत्वं पूर्णत्वं चास्य स्वरूपं । तेन कारणेन धर्मधर्मि-णोरभिन्नत्वेन तुरीय ऐकात्म्यं कीर्तित इत्यर्थः । तथा च एकात्म्यंचासौ प्रत्ययश्चासौ सारश्चैकात्म्यप्रत्ययसारस्तमिति विग्रह इति भावः ।

प्रपंचस्य वाधो यस्मिन्नधिष्टाने सप्रपंचोपशम इति अन्यथा प्रतीतेर्व्याचष्टे ।। **प्रपंच इति** ।। तर्हि शमशब्दस्य सारशब्देन पौनरुक्त्यमित्यतः उपश-ब्दार्थकथनेन परिहरति ।। **उत्कृष्टेति** ।। श्रुतावित्यनुकृष्यते । उत्कृष्टानंदरूपत्वात् तद्विवक्षया श्रुतावुपशब्दः शमविशेषणतया प्रकीर्तितः। उपशब्दस्य प्रकृष्टविषयोक्त्यानन्दपरस्यानन्दपदस्य विषयालंस्पर्शिस्वरूपान-न्दपरत्वात् प्रमोदानन्दपदयोरिव न पौनरुक्त्यमिति भावः । उपशब्दस्य सामिप्यवाचित्वात् कथं उत्कर्षवाचित्यमिति चेदव्ययानामनेकार्थात्वात् । उपेत्यस्योपरीत्यर्थसंभवादुप स्वसमीप एव विद्यमानोऽनन्यगामीति

लाभेनोत्कर्षलाभाच्च । प्रपंचोपशमशब्दस्यार्थांतरमाह ।। **प्रपंचमिति** ।। देहबंधः स्थूलसूक्ष्मशरीरबंधः देहादावभिमानकृतः संस्कारोवा देहबंधः । "देहादीशवशे स्थितं" । "भ्रमंति स्ववशत्वेन तेनेषा संसृतिर्भवेत्" इत्यादेः, रुद्रपरत्वप्रतीतेः शिवशब्दं व्याचष्टे ।। **निर्दुःखेति** ।। मार्गोपशमशब्दाभ्यां पौनरुक्त्यपरिहाराय निर्दुःखेति । सुखविशेषणं शिव इति शब्दो यस्य स शिवशब्दः अतिशयितं शं सुखं "शि" तृतीयोतिशये इत्यकारस्येकारः । अतिशयश्च दुःखासामानाधिकरण्यं । शित्वेन सुखत्वेन वर्तत इति शिव इति व्युत्पत्तेरिति भावः। सजातीयविजातीयभेदशून्यमित्यन्यथाप्रतीतेरद्वैत-पदं व्याचष्टे ।। **अन्यथेति** ।। शमयेन्नाशयेत् । अकारस्य विरोधवाचित्वात् । तेन च उद्दिष्ट इति चशब्दात् । अद्वैतमन्यथा ज्ञातं द्वैताग्राहकमिति वक्ष्यमाणनिमित्तद्वयेन चेति समुच्चिनोति । अद्वैतशब्दं अन्यथाप्रत्यये व्युत्पाद्य दर्शयति ।। **अपेक्ष्येति** ।। द्वैतशब्दांतर्गतं द्वीत्येत-द्भावप्रधानमिति भावेनोक्तं ।। **द्वित्वमिति**।। तच्च न संख्यारूपं किंत्वन्यप्रकारतैवेत्युक्तमन्यप्रकारतेति। तस्य प्रतियोगि सापेक्ष्यत्वादुक्तमपे-क्ष्येति । वस्तुयाथार्थ्यं वस्तुतत्त्वमपेक्ष्य भासमाना यान्यप्रकारता साद्वित्वं । द्वित्वेनान्यप्रकारतया इतं ज्ञातं द्वीतं । द्वीतस्यान्यथाज्ञातस्य भावोऽन्यथा-ज्ञानमेवेति तज्ज्ञानं द्वैतमुच्यत इति योज्यं।। **इतमिति**।। **ज्ञातमिति** ।। कथंलब्धमित्यत उक्तम् ।। **इणिति** ।। चोऽवधारणे । धातुव्याख्यानादेव न बलादित्यर्थः ।

स आत्मा सविज्ञेय इत्यत्र यं चतुर्थं मन्यन्ते स एव निर्गुण आत्मा स विज्ञेय इत्यन्यथा प्रतीतेर्व्याचष्टे ।। **स इति** ।। उपक्रमे सोऽयमात्मा चतु-ष्पादिति यश्चतुर्धा विभक्त आत्मोक्तः स एव स आत्मा सविज्ञेय इत्यत्रोच्यत इत्यर्थः । पुनः किमर्थमत्रोच्यत इत्यत आह ।। **उपसंहारार्थ-मिति** ।। उपक्रांतस्योपसंहारार्थमित्यर्थः । यद्यत्रोपसंहारस्तर्हि सोऽयमात्मा-ध्यक्षरमित्यादिना पुनर्निरूपणं न युक्तमित्यत आह ।। **सोऽयमिति** ।। पृथगारंभादकारादिवाच्यत्वनिरूपणार्थमर्थांतरारंभादित्यर्थः । यद्वा उपसंहा-रायैकबुद्ध्याऽऽरोहेणोपासनं तदर्थमित्यर्थः । तत्तन्महिमानं पृथक्

पृथङ्निरूप्य एकवुद्ध्यारोहेण चतुर्णामुपासनाविधनार्थं पुनरुच्यत इत्यर्थः अत एव स आत्मा सविज्ञेय इत्यस्य स य आत्मा चतूरूप उक्तः । स विज्ञेय उपसंहृत्योपास्य इत्युपनिषदर्थो बोध्यः ।

ननु सोऽयमात्माध्यक्षरमोंकार इत्यादिना तृतीयचतुर्थखण्डयोश्चतुर्णां पृथगुपास्तिं तत्फलंचाभिधाय युञ्जीत प्रणवेचेत इति चतूरूपोपसंहारो विधीयते किमिह चतूरूपोपसंहारविधानेनेत्यत आह ।। **सोऽयमिति** ।। सोऽयमात्माध्यक्षरमित्यत्राकाराद्येकदेशवाच्यत्वादिमहिमांतरारंभात् । तत्तद्विशिष्टतया पृथगुपास्तयः पृथुगुपासितानमेकीकृत्योपास्तिश्च महिमांतर विषयेति नैतद्वैयर्थ्यमितिभावः । आत्मेत्यत्र चतुर्णामुपसंहारेण अत्रोपास्यत्वपरत्वे समाख्यामाह ।। **विश्वेति** ।। यस्त्वात्मेत्यनेन स आत्मा स विज्ञेय इति न विधिद्वयं । किंतु य आत्मा स विज्ञेय इति प्रकृतात्मानुवादेन विज्ञेयत्वविधिरुक्तं भवति । ननु भगवद्रूपेषु भेदाभावदिंद्रार्जुनादिवद्विशेषाभावाच्चैकरूपज्ञानमेवालं किंचतुर्णामुपासनयेत्यत उक्तं।। **निर्विशेष इति** ।।

## पदार्थदीपिका

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य तुरीयस्य तन्निरूपयति ।।**नांतःप्रज्ञमित्यादिना**।। तत्र जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इति विश्वादीनां स्थानोक्तिवत् तुरीयस्य स्थानानुक्तेस्तद्दर्शयति।। **विष्णुरिति** ।। द्वादशांत इत्यस्य मस्तकमारभ्योपरि गगने द्वादशांगुलप्रदेश इत्यर्थ इत्याहुः। वस्तुतस्तु नासिकामारभ्योपरि द्वादशांगुलांते मस्तकमध्य इत्यर्थः । "परमात्मा चतूरूपः सर्वप्राणिशरीरग" इति पूर्वमुक्तत्वादितिध्येयं । तुरीयस्यकार्यं वदन्नदृष्टमित्येतत्सर्वथाऽदृष्टमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे ।। **मुक्तानामिति** ।। तथाच तुरीयोमोक्षद इत्युक्तं भवति । व्यवहारे व्यवहारदशायां संसार इतियावत् । तथाच मुक्तैरदृष्टमित्यर्थ उक्तो भवति ।

ननु सर्वथाऽदृष्टमित्येवार्थःकिंन स्यादित्याशंकायां नेत्याह ।। **सम्यगिति** ।। प्राणाच्छ्रद्धामित्यदिना पट्प्रश्नोक्ताः पोडशकलाः तत्र मुख्यप्राणः पोडशसंख्यापूरिका कला । तथाच सम्यक् भगवति समाहितमनसां ध्यानवतां पोडशीं कलां मुख्यप्राणं प्राप्तानां तत्परमानुग्रहवतामिति यावत् ।

अत एवापरोक्षदृशां अपरोक्षज्ञानस्य तदनुग्रहेकसाध्यत्वात् । कर्तरिचेयं-पष्ठी । तैर्जीवन्मुक्तैः । पद्यत इति पदं स्वप्राप्यं तुरीयं दृश्यत इत्यर्थः । तैरपि नसर्वदा दृश्यते । किंतु प्रारव्धकर्मप्रतिवंधाभावदशायामेवेत्याशये-नोक्तं ।। **क्वापीति** ।। कालविशेप एवेत्यर्थः ।। पायुगुह्ययोरैक्येन दशेंद्रियपंचमहाभूताख्यं पंचदशकलाख्यदेहानुसंधानं विना या षोडशी कला जीवरूपा तां प्राप्तानां देहाद्भेदेन स्वस्वरूपानुसंधानवतां स्फुटतरविवेकज्ञा-नवतां अत एवापरोक्षदृशामित्यप्याचार्या व्याचक्षते । नांतःप्रज्ञमित्यादि-वाक्येऽतःप्रज्ञबहिःप्रज्ञप्रज्ञानघनप्रज्ञशब्दानां चतुर्णामर्थमाह ।। **अंतरिति** ।। उभयतःप्रज्ञशब्दार्थमाह ।। **बहिरिति** ।। जानन् पश्यंश्च भवति जीव इति शेपः । एतदवस्थाप्रेरकौ विश्वतैजसाविति संप्रदायविदः । नञामर्थमाह (नप्रज्ञ इत्यस्यार्थमाह)।। **एतत्सर्वमिति**।। नाप्रज्ञं इत्यस्यार्थमाह ।। **सर्वेति**।। स्वयोग्यतानुसारेण पूर्णज्ञानप्रद इत्यर्थः । तथाच चरमदेहमु-त्सृज्य गच्छतामप्रज्ञो ज्ञानाप्रदो नभवतीति नाप्रज्ञ इत्युच्यत इत्यर्थो द्रप्टव्यः । अदृप्टमित्यस्यार्थं प्रमाणांतरेण दर्शयति ।। **अमुक्तस्यत्विति** ।। कर्तरिपप्टी। तुशब्दो विशेपार्थः । वाशब्दोवधारणे । तथाच विशेषेण पोडशीं कलामृते मुख्यप्राणानुग्रहमंतरेण अपरोक्षज्ञानाभावेन जीवन्मुक्तत्वा-भावात् । तेनादृप्टत्वादेवेत्यर्थः । देहादिना स्फुटतरविवेकरूपस्य पोडशकलाख्यजीवस्वरूपानु- संधानरूपापरोक्षज्ञानस्य तदनुग्रहैकसाध्यत्वात् अपरोक्षज्ञानस्याभावेनामुक्तस्येत्यर्थ इत्यप्यार्याः ।

अव्यवहार्यमित्यस्यार्थमाह ।। **ग्रहणादेरिति** ।। उपादानादिरूपव्यवहार-स्येत्यर्थः ।। **विनामुक्तिमिति** ।। मुक्तौतु भगवद्ग्रहणादिकं भक्तस्यास्तीति-भावः । तथाचाग्राह्यत्वमव्यवहार्यशब्दार्थ इति द्रप्टव्यं । अलक्षणमित्य-स्यार्थमाह ।। **जाग्रदादीति** ।। अदिपदेन स्वप्नसुषुप्तिसंग्रहः । अलक्षणमचिंत्यमित्यनयोर्हेतुहेतुमद्भाव इत्याह ।। **अचिंत्य इति** ।। तत एव अनुमापकधर्मराहित्यादेव । अनुमित्याख्यचिंताऽविषय इत्यर्थः । अचिंत्यमव्यपदेश्यमित्यनयोरपि हेतुहेतुमद्भाव इत्याह ।। **तत एवेति** ।। अचिंत्यत्वादेवेत्यर्थः । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति भावः ।

नन्वलक्षणमित्यस्य सर्वथालक्षणरहितमित्येवार्थः किंनस्यादित्यत आह ।। **चिदानंदेति** ।। मुक्तस्य सर्वव्यापारहेतुत्वाख्यलक्षणसद्भावाच्च नसर्वथालक्षणराहित्यं तदर्थ इत्याशयेनाह ।। **मुक्तस्येति** ।। ऐकात्म्यप्रत्ययसारमित्यत्र ऐकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति विग्रहमभिप्रेत्यैकात्म्यादिपदानामर्थमाह ।। **एक इत्यादिना** ।। तदेव प्रधानपूर्णत्वमेव । प्रपंचोपशममित्यत्र प्रपंचश्चासावुपशमश्चेति विग्रहमभिप्रेत्य प्रपंचोपशमशब्दयोरर्थमाह ।। **प्रपंच इति** ।। प्रपंचशब्दस्य विस्तारवाचित्वाद्विस्तृतेरित्युक्तं । देशतः कालतः गुणतश्चेत्यर्थः । शम आनंदरूपत इत्यस्मात्पूर्वं उच्छब्दापरपर्याय उपशब्द उत्कृष्टवाचीति पूरणीयं । एवं उपशमशब्दयोः अर्थमुक्त्वा वाक्यार्थमाह ।। **उत्कृष्टानंदरूपत्वादिति** ।। तथाच सारपदेनागतार्थतेति द्रष्टव्यं। उत्कृष्टत्वं चात्रापरिच्छिन्नत्वं विवक्षितं। ननिर्दुःखत्वं। तेन न शिवशब्देन गतार्थतेति मंतव्यं । उपशब्द इति नामैकदेशग्रहणे नामग्रहणं । भीमो भीमसेन इतिवत्। तथाच उपशमशब्दवाच्य इत्यर्थः । प्रपंचस्यदेहबंधरूपस्योपशमो नाशो यस्माद्भवति असौ प्रपंचोपशम इत्यर्थांतरमप्याह ।। **प्रपंचमिति** ।। **तेनापीति** ।। अनेन निर्वचनेनापीत्यर्थः ।

सारोपशमशब्दागतार्थतया शिवशब्दार्थमाह ।। **निर्दुःखेति** ।। शिवशब्दःशिवशब्दवाच्यः श्रुतौश्रुतइत्यर्थः । नविद्यते द्वैतं भिन्नं यस्मात्तदद्वैतमित्यन्यथाप्रतीतिनिरासायाद्वैतशब्दार्थमाह ।। **अन्यथाप्रत्ययइति** ।। वस्तुगतयाथार्थ्यापेक्षयेतिशेषः । शमयेत् मुक्तिदानेन ज्ञानदानेन वेति । अन्यथा प्रत्ययस्य कथं द्वैतशब्दवाच्यत्वमित्यतः प्रमाणांतरेण तद्दर्शयति ।। **अपेक्ष्येति** ।। वस्तुयाथार्थ्यमपेक्ष्य याऽन्यस्वरूपता साद्वित्वं। वस्तुयाथार्थ्यमपेक्ष्य द्वितीयःप्रकार इत्यर्थः । तद्द्वीत्युच्यत इतिग्राह्यं । इण्गताविति धातोर्भावे क्त प्रत्यये इतशब्देन ज्ञानमुच्यत इत्यपि ग्राह्यं । एवं पदार्थमुक्त्वा वाक्यार्थमाह ।। **तज्ज्ञानमिति** ।। तथाच वस्तुगतयाथार्थ्यापेक्षया द्वितीयेन प्रकारेण ज्ञातं द्वीतं । स्वार्थे चाण्प्रत्यये द्वीतमेव द्वैतमुच्यत इत्यर्थः । स आत्मा सविज्ञेय इति तुरीयस्यैव आत्मत्वादिकमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ।। **सआत्मेति** ।। सोयमात्मा चतुष्पादिति

विश्वादिरूपेण चतुर्धाविभक्त एव स आत्मा सविज्ञेय इत्युच्यते । तन्किमर्थमित्यत उक्तं ।। **उपसंहारार्थमिति** ।। चतुष्पात्स्वरूपनिरूपणोपसंहारार्थमित्यर्थः ।

ननूपसंहारार्थमित्ययुक्तं । सोयमात्माध्यक्षरमित्यादिना पुनस्तत्स्वरूपनिरूपणस्य क्रियमाणत्वेन तत्समाप्त्यनंतरमुपसंहारस्य कर्तुमुचितत्वादित्यत आह ।। **सोयमिति** ।। विश्वादीनां प्रणवांशाकारादिप्रतिपाद्यत्वं वक्तुं सोयमित्यादेः प्रकरणांतरारंभार्थत्वान्न पूर्वप्रकरणेनैकवाक्यता । अत उपसंहारार्थमित्युक्तं युक्तमिति भावः । स आत्मा सविज्ञेय इत्युक्तमात्मत्वादिकं विश्वादिरूपचतुष्टयसाधारणं नतु तुरीयस्यैवेत्यत्र प्रमाणमाह ।। **विश्वादिरूपइति** ।। निर्विशेपोपि इंद्रार्जुनादिवद्विशेपरहितोपि । केवलं विशेषबलेन चतुर्धासमुदीरित इत्यर्थः । निर्विशेपोपि निर्भेदोपीतिवा ।

## उपनिषत्

**अत्रैते श्लोका भवन्ति ।**
**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।**
**अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ।।**

## भाष्यम्

**सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः ।**

**"हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः ।**
**देवः स सर्वजीवानां गम्यत्वात् समुदीरितः ।।**
**भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः ।**
**ईशानामपि मुक्तानामीशानः सोऽननाच्छ्रुतः ।।"**

**इति प्रत्याहारे ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - उक्तार्थं श्लोकैः संवादयन् आह ।। **अत्रेति** ।। प्रपंचोपशममिति सर्वारिष्टनिवृत्तिकारणं तुरीयमित्युक्तं । तत्रमंत्रंपठति ।। **निवृत्तेरिति** ।।

**भाष्यार्थः** - निवृत्तेः सर्वदुःखानामित्यस्यान्वयाप्रतीतेरपेक्षितं दर्शयति ।। **सर्वेति** ।। तुरीयः सर्वदुःखनिवृत्तिकारणमित्येतत् कुतः केन निमित्तेन देवश्चेत्यत आह ।। **हरिरिति** ।। दीव्यते गम्यत इति व्युत्पत्तिः । ननु मूले जीववाचकं नास्ति तत्कथं जीवगम्यत्वाद्देव इति कश्चेशानशब्दार्थ इत्यत आह ।। **भावा इति** ।।

## गूढकर्तृका टीकाटिप्पणी

।। **निवृत्तेरितीति** ।। कारणभूत इति शेषः । ईशानां मुक्तानामनना-च्चेष्टकत्वादीशानां प्रभुः स्वामी। अव्ययःअनित्यत्वादिचतुर्विधनाशरहितः। अद्वैतः मिथ्याज्ञाननाशकः । सर्वभावानां सर्वजीवानाम् । विष्णोर्भवन्ति जायन्त इति वा "भुक्" । भू शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्त्या चिन्ता-र्थस्य भवतेर्ण प्रत्यये भाव इति सिध्या भवन्ति चिन्तयन्ति इति चेतना इति लाभात् । तेषां देवः प्राप्यः । गत्यर्थाद्दीव्यतेः कर्मण्यच् प्रत्ययः । विभुः व्याप्तः । तुर्यः तुरीयरूपी हरिः । चतुःशब्दस्याद्यक्षरलोपे यत् प्रत्यये च तुर्य इति सिद्धिः ।।

## प्रकाशिका

कान्तिगतिमतीनां श्रुत्युक्तत्वाद्देवो गम्यत इति भावेनाह ।। **सर्वजीवानां गम्यत्वादिति** ।। सर्वदुःखानां निवृत्तेः प्रभुरित्येतावतैव पूर्ते पुनरीशानपदस्य वैयर्थ्यं स्यादित्यत आह।। **ईशानामपि मुक्तानामिति** ।। अननात् अनचेष्टा-यामिति धातोः प्रेरणादित्यर्थः ।

## भाष्यविवृतिः

तत्रप्रमाणयति ।। **अत्रैत इति** ।। सर्वदुःखानां निवृत्तेः कारणम् इदं च प्रपञ्चोपशममित्यस्य व्याख्यानम् । ईशानां मुक्तानां अननाच्चेष्टनादीशानः। प्राभवदिति प्रभुः । तथाहि वारुणशाखायां "विभु प्रभु प्रथमंमेहनावत इति सह्येव प्राभवद् विविधोऽभवद् " इति । अद्वैतं निरव्रम । सर्वभावानां सर्वजीवानां गम्यत्वात् प्राप्यत्वाद्देवः । अयं च तुर्यः नासिकामूलमारभ्य द्वादशाङ्गुलान्ते व्यवस्थितः । दीव्यतेर्गतिकर्मणः कर्मणि घञ् । तुर्यः

चतुरश्छयतावाद्यक्षरलोपश्चेति चकारलोपे यत्प्रत्यये तुर्यः । विविधमासीदिति विभुः ।

## भाष्यार्थरत्नावलिः

उपनिषद्युक्तार्थे श्लोकाः प्रमाणत्वेनोच्यन्ते ।। **अत्रैत इति** ।। ऐकात्म्य प्रत्ययसारं प्रपंचोपशमं शिवमद्वैतं मन्यन्ते इत्युक्तार्थे मंत्रः पठ्यते ।। **निवृत्तेरिति** ।। तत्र प्रपंचशब्दितस्य दुःखापादकदेहबंधस्योपशमो निवर्तक इत्युक्तार्थे प्रमाणं निवृत्तेः सर्वदुःखानामिति । शिवादिपदोक्तनिर्दुःखानन्दरूपत्वे युक्तिर्वा निवृत्तेरिति । एकशब्दोक्तप्राधान्ये ईशान इति । प्रत्यय इत्यत्र प्रभुरिति प्रकर्षेण भवत्यनुभवतीति प्रभुरित्यर्थः । शिवशब्दोक्ते निर्दुःखत्वे आत्मपदोक्ते पूर्णत्वे चाव्यय इति । दुःखप्राप्त्यपूर्णतयाव्ययशब्दार्थत्वात् । अद्वैतमित्यत्राद्वैत इति । सर्वदुःखनिवृत्तिकारणत्वं कथमित्यतो मुक्तगम्यत्वादिति भावेनोक्तं सर्वभावानां देव इति । यद्वा अव्यवहार्यत्वमिति विश्वादिवदसंव्यवहार्यत्वमुक्तं तर्हि गम्यत्वमपि नास्तीत्याशंका वारणायोक्तं सर्वभावानां देव इति । प्रपंचो विस्तृतेरित्युक्तव्याप्तत्वे प्रमाणं विभुरिति । चतुर्थ इत्यस्य नामत्वनिर्वाहाय तुरीय इति । अत्र पूर्वार्धे ईशानस्य रुद्रस्य दुःखनिवर्तकमुक्तमत्तरार्धे तुरीयस्य सुदुःखनिवर्तकत्वमित्यद्वैतमुच्यते । सैव परममुक्तिरिति अन्यथाप्रतीतेर्व्याचष्टे ।। **सर्वेति** ।। निवृत्तेः प्रभुरित्यन्वयमभिप्रेत्य तस्य तात्पर्यं कारणभूत इति । नात्रेशानानुवादेन पूर्वार्धे दुःख निवृत्तिकारणत्वं विधीयते। किंतूत्तरार्धगततुर्यानुवादेन दुःखनिवृत्तिकारणत्वं विधीयत इति भावः ।

तुरीयस्य दुःखनिवर्तकत्वे युक्त्युपन्यासाय देव इत्यधिकांशानुवादः । सर्वभावानां देवो गम्य इति मुक्तौ गम्यत्वोक्तेः । तुरीय एव दुःखनिवर्तक इत्यर्थः। श्रुतेरुक्तार्थत्वे प्रमाणमाह।। **हरिरिति** ।। सर्वजीवानां मुक्तसर्वजीवानां दीव्यतेर्गत्यर्थत्वादिति भावः । जीवा अत्र नश्रूयन्त इत्यत उक्तं ।। **भावा इति** ।। भवंति मुक्तास्संतः स्वरूपेण प्रादुर्भवंति । तर्हीशानपदस्य कोर्थ इत्यतः तन्निर्वक्ति ।। **ईशानामिति** ।। मुक्तानामपि ईशानां ब्रह्मादीनां अननात् प्रेरणादित्यर्थः । ततश्चायं मंत्रार्थः । तुरीयः तुरीयरूपो

हरिः सर्वदुःखानां निवृत्ते प्रभुः समर्थः कारणभूतः । यद्वा प्रभुः सर्वज्ञः मुक्तानपि ईशान् नयतीतीशानः। अव्ययो दुःखप्राप्त्यपूर्णताख्याव्ययरहितः । अद्वैतो मिथ्याज्ञाननिवर्तकः सर्वभावानां जीवानां देवो गम्यः विभुर्व्याप्त इति श्रुतिषु प्रसिद्ध इति ।

## पदार्थदीपिका

नांतःप्रज्ञमित्यादिनोक्तार्थे प्रमाणत्वेन सलिलेश्वरोदाहृतश्लोकेष्वादौप्रपंचोपशममित्यस्मिन्नर्थे संमतितयोदाहृते निवृत्तेरिति श्लोके पदानां व्यवहितत्वात् प्रभुशब्दार्थं वदन्नेवान्वयं दर्शयति ।। **सर्वदुःखानामिति** ।। कारणभूतइति प्रभुशब्दार्थकथनं । ननु तुरीयस्य सर्वदुःखनिवृत्तिकारणत्वं कुत इत्यत आह ।। **हरिरिति** ।। मोक्षदत्वात्सर्वदुःखनिवृत्तिकारणत्वमिति भावः । सर्वभावानां देव इत्यस्यार्थमाह ।। **देवइति** ।। सर्वभावानामित्यम्याथा जीवानामिति । कर्तरिषष्ठी ।। **गम्यत्वादिति** ।। देव इत्यस्य "दिव् क्रीडाविजिगीषाद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु" इति धातुव्याख्यानादितिभावः । तथाच "दिवु धातोर्घञर्थे कविधान"मितिवार्तिकेन कर्मणि कप्रत्यये ककारलोपे कित्वेपि च्छांदसत्वाद् गुणेच सति निष्पन्नो देवशब्दो गम्यत्ववाचीति ज्ञातव्यं । सर्वभावानामित्यस्य सर्वजीवानामित्यर्थ उक्तस्तत्र जीवानां कथं भावशव्दवाच्यत्वमित्यत आह ।। **भावाजीवाइति** ।। भवंति देहसंबंधेनोत्पद्यंते । ईशान इत्यस्यार्थमाह ।। **ईशानामपीति** ।। ईशानां मुक्तानामननात् । अनचेष्टायामिति धातोश्चेष्टकत्वादीशानः श्रुत इति योजना ।

## उपनिषत्

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ।।**

## भाष्यम्

"कार्यकारणबन्धस्य तदधीनत्वतो विभुः ।
विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ ।
कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः ।।" इति च ।

**"स बद्धः सदुःखी बन्धयति स दुःखयतीति । स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति । सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति "इति कौषारवश्रुतिः ।**

**"विष्णुर्गुणोक्तिपरता मम नित्यं सुरेश्वराः ।**
**तदर्थमन्यद् वचनमतस्तस्य विरोधि यत् ।।**
**तन्ममार्थो नहि क्वापि साऽहं तत्सरणात् सदा ।**
**सरम्वतीति सम्प्रोक्ता तस्माज्ज्ञेया हरेर्गुणाः ।।"**

**इति महोपनिषदि ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - नांतःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञमिति यत्तुरीयस्य विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तं तत्र मंत्रं पठति ।। **कार्येति** ।। कार्यकारणे अविद्याभ्रमौ ।

**भाष्यार्थः** - कार्यकारणवद्धावित्यादि विश्वादीनामविद्यातत् कार्यवद्धत्वपरत्वप्रतीतिं निवारयन्व्याचष्टे ।। **कार्येति** ।। वद्धत्वमेवार्थः किंनस्यदित्यत आह ।। **कुत इति** ।। चिदात्मनः जडामिश्रितकेवलचिन्मात्रत्वान्नवद्धत्वमित्यर्थः । वंधकत्वात् वद्ध इत्येतच्छ्रुत्या च समर्थयते ।। **सबद्ध इति** ।। इतोपि वंधकत्वात् वद्ध इत्येवार्थोन्यथा श्रुत्यभिप्रायविरोध इत्याशयवांश्छ्रुत्यभिप्रायप्रतिपादिकां श्रुतिं पठति ।। **विष्णोरिति** ।। कथमेतत् व्रह्मादिगुणवचनादित्यत उक्तं ।। **तदर्थमिति** ।। तव विष्णोर्गुणोक्तिपरतास्तीति कुत इत्यतः स्वनामनिरुक्त्या समर्थयते ।। **साहमिति** ।। गुणाः गुणा एव ।

## गूढकर्तृका टीकाटिप्पणी

।। **नान्तःप्रज्ञमिति** ।। स्वप्ने तैजसवदज्ञानमिथ्याज्ञानाभ्यां न बन्धयतीत्यर्थः । नवहिःप्रज्ञम् । जाग्रति विश्ववदज्ञानान्यथाज्ञानाभ्यां न वन्धयति इत्यर्थः ।। **नाप्रज्ञम्** ।। सुप्तौ प्राज्ञवदज्ञानमात्रेण न बन्धक इत्यर्थः । विश्वादिभ्यस्त्रिभ्य इति । अत्र नान्तःप्रज्ञमित्यादि पदत्रयेण विश्वतैजसाभ्यां वैधर्म्यमुक्तम् । नाप्रज्ञमित्यनेन प्राज्ञाद्वैधर्म्यमिति विवेकः । यद्यपि तुरीय-

व्यापारप्रतिपादकमेतत्पदम् । तथाऽपि प्राज्ञाद्वैधर्म्यमप्यनेन प्रतीयत इत्य-भिप्रेत्यैवमुक्तमित्यविरोधः। अन्यथारूपत्रयवैधर्म्यप्रतिपादककार्यकारणेति मन्त्रो विरुध्येत । नच नप्रज्ञानघनमित्यादिना प्राज्ञाद्वैधर्म्यमप्युक्तमतो न मन्त्रविरोध इति वाच्यम् । प्राज्ञः कारण वद्धस्त्वितिमन्त्रे अविद्ययेव बन्धकत्वरूपव्यापारवतः प्राज्ञाद्वैधर्म्यस्योक्तत्वात् । न प्रज्ञानघनमित्यादौ जीवादिप्रज्ञापकत्वरूपव्यापारवतः प्राज्ञाद्वैधर्म्यस्योक्तेः। अतस्तुरीयं व्यापार-प्रतिपादकं नाप्रज्ञमितिपदं अविद्ययैव वन्धकत्वरूपव्यापारवत्प्राज्ञाद्वैधर्म्यमपि प्रतिपादयतीत्युक्ते न विरोधः । अत एव वेदपुरुषः नाप्रज्ञमिति निषेधद्वयेन तुरीयव्यापारमाह । अन्यथा प्रज्ञापकं तुरीयमित्यवक्ष्यत् । अत एव न प्रज्ञानघनमित्यादिपदद्वयं विहायान्तिमं नाप्रज्ञमिति पदं प्रथमं योजितमित्यव-गन्तव्यम् ।

।। **वैधर्म्यमुक्तमिति** ।। विरुद्धो धर्मोयस्य स विधर्मा । "धर्मादानिच् केवलादि"ति अनिच् प्रत्ययान्तो धर्मशब्दः । विधर्मणो भावो वैधर्म्यम् । विधर्मन्शब्दात् ष्यञ् प्रत्यये वैधर्म्यमिति रूपसिद्धिः । कार्यकारणे अविद्या-भ्रमाविति । यथायोग्यं सम्बन्धः । अयमर्थः । अविद्याकार्यं द्विविधम् जाग्रद्भ्रमरूपं स्वाप्नभ्रमरूपं चेति । तत्र जाग्रद्भ्रमः साक्षादविद्याकार्यम् । स्वाप्नभ्रमस्तु जाग्रद्भ्रमजन्यत्वात् परम्परया तत्कार्यम् । नच स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वमप्रसिद्धमिति वाच्यम् । "अदृष्टे चाश्रुतेभावे न भाव उपजायत" इति संस्कारद्वारा तत्कारणकत्वस्य प्रमितत्वात् । अत एव अन्यथा गृण्हतः स्वप्न इत्युत्तरवाक्यं "भाष्ये विपरीतज्ञानादपि विपरी-तज्ञानान्तरं जायत" इति व्याख्यास्यति । एवं च कार्येण अविद्याकार्येण अहं ममेत्यादिस्वातन्त्र्यादिविषयकजाग्रत्कालीनभ्रमेण कारणेन अविद्यया बन्धको विश्वः । कार्येण अविद्यातत्कार्यजाग्रत्कालीनभ्रमरूपोभयकार्यस्वा-प्नभ्रमेण । कारणेन अविद्यया च बन्धकस्तैजसः ।

ननु विश्वतैजसयोरुभयोरपि द्विविधवन्धवत्वे कार्यभ्रमरूपजाग्रद्बद्धो विश्वः । तत्कारणभ्रमरूपस्वप्नवद्धस्तैजस इति तत्वप्रकाशिकाविरोधः । तत्रैकस्यैव वन्धस्योपपादनादिति चेत् । मैवम् । कार्यभ्रमबद्धत्वे

तत्कारणाविद्याबद्धत्वमर्थात्सिद्धमेवेत्याशयेन तदनभिधानात् । अन्यथा विश्वतैजसयोर्द्विविधबन्धवत्वेनेत्यव्यवहितपूर्ववाक्यं विरुध्येत । एवमुक्त-रीत्योभयविधजाग्रत्स्वाप्नभ्रमकारणाविद्यारूपसुप्तिमात्रबद्धः प्राज्ञः । कार्य-कारणाकारेण द्वावपि बन्धौ तुरीये नस्त इति । बन्धादिदोषशून्यस्य बद्धत्वं कथमिति शङ्कां "कार्यकारणबन्धस्य तदधीनत्वतो विभुः । विश्वादिरूपी भगवान् बद्धइत्युच्यते श्रुताबि"ति भाष्यकर्तैव परिहरिष्यति । यद्यपि विश्वादिरूपत्रयमवस्थात्रये यथार्थज्ञानमपि जनयति । तथाऽपि तुरीयस्य तद्वैधर्म्यप्रतिपादनार्थमेवाविद्यादिबद्धत्वमुच्यते न यथार्थज्ञानजनकत्वाभावा-भिप्रायेण । अन्यथा ज्ञानमात्रस्यापि भ्रमत्वापत्तेरिति बोध्यम् ।

ननूक्तरीत्या विश्वतैजसयोः कार्यकारणोभयविधबन्धकत्वेन प्राज्ञतुरी-याभ्यां भेदेऽपि तयोः परस्परं व्यावर्तकधर्माभावेन भेदो न स्यादिति चेत् । न । अविद्यारूपकारणबद्धत्वस्योभयत्राविशिष्टत्वेप्युक्तरीत्या अविद्याकार्य-भ्रमरूपजाग्रद्बद्धत्वं विश्वे तत्कार्यभ्रमरूपस्वप्नबद्धत्वं तैजस इति कार्यबद्धत्वेन वैलक्षण्यसद्भावेन तयोर्भेदात् । यद्यपि तत्वप्रकाशिकायां जयतीर्थश्रीमच्चरणैः "कार्यकारणबद्धौ ताबि"ति भाष्यव्याख्यानावसरे कारणशब्देन स्वप्नकारणत्वेन जायमानभ्रमो व्याख्यातः । तथापि व्याख्या-नान्तरमेतदित्यविरोधः । एतत्सर्वं "ओं नभेदादिति चेन्न प्रत्येकमतद्वचनात् ओं" इति तृतीयाध्यायद्वितीयपाद सूत्रभाष्य तत्त्वप्रकाशिकाभावबोधे स्पष्टमिति नाप्रामाण्यशंकाकलंकावकाशः । इति सर्वं समञ्जसम् ।

## प्रकाशिका

बन्धसम्बन्धी बद्ध इत्युच्यते । सम्बन्धश्चाधाराधेयभावो जीवे, हरौ स्वस्वामिभावः । अतः शब्दशक्त्यैवायमर्थः सिद्ध इति ज्ञेयम् ।। एवं भगवति योग्यार्थसम्भवेऽपि योहरौ द्वेषाद्बद्धत्वपर्यंततारार्णं विश्वादीनामेव बद्धत्व-माशास्ते तं "एष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्य" इति विश्वादीनां महामाहात्म्यं प्रतिपादयन्ती श्रुतिरेवाभासीकृत्य, नरके पातयित्वा वायुदूतैर्बद्धान् करिष्यति । अतोऽस्माभिः पृथक् न प्रयतितव्यम् ।

## भाष्यविवृतिः

नान्तःप्रज्ञं नबहिःप्रज्ञं नाप्रज्ञमिति तुरीयस्य विश्वादिभ्यस्त्रिभ्यो वैधर्म्यं उक्तं तत्र मन्त्रेऽधिजगे ।। **कार्येति** ।। कार्यकारणबद्धौ विश्वतैजसौ अविद्याभ्रमाभ्यां बद्धौ बन्धस्य तदधीनत्वाद् अत एव "सबद्धः स दुःखी स बन्धयती"ति श्रुतिः । नन्वत्र बद्धं करोति बद्धयति ततः स बद्ध इति वक्तव्ये बन्धयतीति सबद्धः इति कथम् । "धातुरूपं चेति" सूत्रे णिचि परतः प्रातिपदिकस्य धातुरूपापत्यनुशासनेऽपि एतत्सूत्रविवरणपरवार्तिके "आख्यानात् कृतः तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् भवति" इत्यत्र आख्यानवाचकात् प्रातिपदिकात् तदाचष्ट इत्यर्थके णिचि धातुरूपापत्यादेरभिधानात् नैष दोषः । धातुरूपं चेतिसूत्रे तत्करोति तदाचष्ट इत्येतदर्थके णिचि प्रातिपदिकस्य धातुरूपापत्यनुशासनेन तत्करो-तीत्यर्थे णिचि धातुरूपापत्तिनिवारणे बीजाभावात् । वार्तिकेऽपि मुखतस्तत्करोतीत्यर्थकणिचि धातुरूपापत्तिनिषेधस्यादर्शनाच्च । दुःखयतीति दुःखीत्यत्रतु क्विपि णिलोपे सति "निमित्तापाये नैमित्तकस्याप्यपायः" इति न्यायेन टिलोपनिवृत्तेरगत्याश्रयणीयत्वान्न दोषः । श्रुतीनां मोक्षफलकानां भगवत्परताया एव न्याय्यत्वाच्च । देवताभिप्रायाच्च तथावगतिः । तथाच श्रुतिः "विष्णोर्गुणोक्तिपरते"त्यादिका ।

## भाष्यार्थरत्नावलिः

नान्तःप्रज्ञमित्यादिना विश्वतैजसयोः भ्रमाभ्रमसाधारणस्वाप्नजाग्रदज्ञानहे-तुत्वोक्त्या भ्रमेण बंधकत्वमत एव तत्कारणाविद्याबंधकत्वमुक्तं । प्राज्ञस्य तमसावृतजीवादिमात्रप्रकाशकत्वोक्त्या विद्यया बंधकत्वं । तुरीयस्य तदभावोक्त्या वैलक्षण्यमित्युक्तार्थे मंत्रः पठ्यते ।। **कार्यकारणेति** ।। कार्यमविद्याकार्यजाग्रद्भ्रमः स्वाप्नो भ्रमश्च कारणमविद्या ताभ्यां तौ विश्वतैजसौ बद्धाविष्येते । कार्यकारणाभ्यामविद्याजाग्रद्भ्रमाभ्यां विश्वो बद्धः अविद्यास्वाप्नभ्रमाभ्यां तैजसो बद्ध इति यावत् । प्राज्ञः भ्रमकारणा-विद्ययैव बद्धः। तुर्येतु द्वावपि बंधौ नसिद्ध्यत इत्यर्थः । यद्वा स्वप्नकार्यभ्रमरूपजाग्रद्वद्धो विश्वः । तत्कारणस्वाप्नबद्धस्तैजसः । विश्वः

स्वप्नादुत्थाने तैजसाद्विभक्तो भवतीति विश्वस्य तैजसकार्यत्वस्य वक्ष्यमाणत्वात् । जाग्रत्कार्यभ्रमरूपस्वप्नबद्धः तैजसः । तत्कारणभ्रमरूपजाग्रद्बद्धो विश्वः । अन्यथा गृह्णतः स्वप्न इत्यस्य विपरीतज्ञानादपि विपरीतज्ञानांतरं जायत इति भाष्ये व्याख्यास्यमानत्वात् । एवं च तावन्योन्यकार्यकारणभावमापन्नौविश्वतैजसौ द्वावपि कार्यकारणबद्धाविष्येते। प्राज्ञस्तु मूलकारणाविद्ययैव बद्धः । तुरीयेतु द्वौ वंधौ मूलकारणाविद्याबंधः परस्परं कार्यकारणभावापन्नजाग्रत्स्वप्नबंधश्चेति द्वावपि न सिद्ध्यत इत्यर्थः । अयंचापि विशेषस्तत्वप्रकाशिकायामवगंतव्यः । अत्र विश्वादीनां अविद्यातत्कार्यबद्धत्वपरत्वप्रतीतिं वारयन् व्याचष्टे ।। **कार्येति** ।। "तदधीनत्वादर्थवत्" इत्युक्तन्यायेनान्यनिष्टस्यापि कार्यकारणबंधस्य तदधीनत्वाद् भगवान् बद्ध इत्युच्यते । बंधवान् बंधः । बंधवत्वं च स्वामिता संबंधेनेश्वरेऽस्त्येवेति स बद्ध इत्युच्यते ।

ननु बंधकृतविक्रियाश्रयत्वेन बद्धत्वं किं नस्यादित्यत आह ।। **कुत इति** ।। चिदात्मनः जडामिश्रकेवलचिद्देहस्य बंधयतीति बद्ध इति । कर्तृव्युत्पत्तिमाश्रित्यापि बद्धशब्दवाच्यत्वं श्रुत्या दर्शयति।। **सबद्ध इति** ।। इतोपि बंधकत्वात् बद्ध इत्येवार्थोङ्गीकार्यः । श्रुत्यैव स्वाभिप्रायवर्णनपूर्वं तद्विरुद्धस्य स्वार्थत्वाभावस्योक्तत्वादित्याशयेन तां श्रुतिं पठति ।। **विष्णोरिति** ।। कथमेतद्ब्रह्मणि गुणावचनादित्यत उक्तं तदर्थमिति । अन्यद्भगवद्विषयादन्यत् । यदि मम गुणोक्तिपरता न स्यात् तर्हि मन्नामनिरर्थकं स्यादिति भावेन स्वनाम निर्वक्ति ।। **सोऽहमिति** ।। गुणा एव मदर्थतया ज्ञेयाः ।

## पदार्थदीपिका

नांतःप्रज्ञं नबहिःप्रज्ञं नप्रज्ञानघनमिति तुरीयस्य यद्विश्वादिभ्यस्त्रिभ्योवैधर्म्यमुक्तं तत्र संमतितयोदाहृते कार्यकारणबद्धौ ताविति मंत्रे विश्वादीनां त्रयाणां बद्धत्वमुच्यते । तदयुक्तं । सर्वमानविरोधादित्यतो बद्धत्वोक्तेरभिप्रायं प्रमाणेन दर्शयति ।। **कार्यकारणबंधस्येति** ।। जीवनिष्ठकार्यकारणबंधस्येत्यर्थः । खंडार्थकथनसमये इदं प्रपंचयिष्यामः । तदधीनत्वत इत्यनेन

तदधीनत्वादर्थवदितिन्यायं सूचयति । उक्तंचानुव्याख्याने । "दुःखिबद्धा-वराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तंत" इति । श्रुतौ कार्यकार-णबद्धाविति श्रुतौ । प्रतीत एवार्थः किं नस्यादित्यत आह ।। **कुतइति** ।। बंधेशस्य बंधदातृतया तत्स्वामिनः । बंधयतीति बद्ध इति कर्तृव्युत्पत्त्यापि बद्धादिशब्दवाच्यत्वं हरेरिति भावेन श्रुतिं पठति ।। **सबद्धइत्यादिना** ।। उक्तंचन्यायविवरणे । "प्रसिद्धत्वात्कर्तृव्युत्पत्ते"रिति । किंच यदिहरेर्बद्धत्व-मेवश्रुत्यर्थः तर्हि श्रुतीनां यद्भगवद्गुणेत्कर्षे महातात्पर्यं तद्विरुद्ध्येत । ननु गुणोत्कर्षे एव महातात्पर्यं श्रुतीनां कुत इति चेत्तत्राह ।। **विष्णोरिति** ।। सुरान्प्रति वेदाभिमानिसरस्वतीवाक्यमिदं । अतो ममेति युक्तं । गुणोक्ति-परता गुणोक्तौ तात्पर्यवत्त्वमित्यर्थः । हे सुरेश्वराः ।

ननु कथमेतत् वैष्णवानां ब्रह्मादीनामपि महिम्नः प्रतिपादनादित्यत आह ।। **तदर्थमिति** ।। यदा वैष्णवानां ब्रह्मादीनामित्थं महिमा तदा किंवाच्यं विष्णुरपारमहिम इत्येवंरूपेण विष्णोर्गुणोत्कर्षप्रतिपादनार्थमित्यर्थः । अन्यद्वचनं भगवदितरेषां गुणोत्कर्षप्रतिपादकं वचनं । यथोक्तं । "चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यत"इति। तस्य गुणोत्कर्षस्य । मम संमतः। सरस्वतीति मन्नामनिर्वचनपर्यलोचनयापि मम विष्णोर्गुणोत्कर्ष एव महाता-त्पर्यमित्याशयेनाह ।। **सेति** ।। **तत्सरणादिति** ।। तस्य भगवद्गुणोत्कर्ष-विरोध्यर्थस्य सरणात् अपसारणात् अहं सरस्वतीत्यर्थः । यद्वा सृगताविति धातोस्तां विष्णुगुणोत्कर्षोक्तिं प्रत्येव मम सदा गमनादहं सरस्वतीत्यर्थः ।

ननु सरःसरणं अस्या अस्तीत्यर्थे सरस्शब्दात्मतुप्प्रत्यये सरस्मतीति स्यादिति चेदुच्यते । "मादुपधायाश्चमतोर्वोयवादिभ्य" इत्यनेन मतुपो मकारस्य वकारांगीकारात् । तथाच सरस्शब्दात्तदस्यास्तीत्यर्थे मतुप्प्रत्यये उप् इत्यस्य लोपे मकारस्य वकारे सरस्वदिति जाते स्त्रीत्वविवक्षायां ङीपि सरस्वतीति युक्तमित्यवगंतव्यं । संप्रोक्ता यस्मादिति शेषः । गुणाः गुणा एव वेदप्रतिपाद्यत्वेन ज्ञेयाः ।

## उपनिषत्

**नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ।।**

## भाष्यम्

"नाऽत्मानं न परांश्चैव न सत्यं चापि नानृतम् ।
प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना ।।

सुप्त्यवस्थां सुखं चाऽपि विना नान्यत् प्रदर्शयेत् ।
सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः।।" इति प्रत्यये ।

"स्वतन्त्रे कर्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा ।
सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम् ।।" इति ब्रह्मतर्के ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - नप्रज्ञानघनं नाप्रज्ञमित्युक्ते प्राज्ञाद्वैधर्म्ये मंत्रं पठति ।। **नात्मानमिति** ।।

**भाष्यार्थः** - नात्मानं नपरांश्चेत्येतत्प्राज्ञस्यात्मादिज्ञानाभावार्थत्वप्रतीतिं निवारयन्व्याचष्टे ।। **नात्मानमिति** ।। किंचन नसंवेदयेदित्यस्यापवादमाह ।। **जीवेति** ।। तुर्यं तत्सर्वदृक् सदेत्येतत्तुरीयस्य सार्वज्ञप्रतिपादकत्वप्रतीतिं निवारयन्व्याचष्टे ।। **सर्वमिति** ।। ननु भवतूक्तप्रमाणबलाद् बंधकत्वादिना बद्धत्वादिकं अमुख्यार्थे मुख्यप्रयोगे किं कारणमित्यतः स्वातंत्र्यमित्याह ।। **स्वतंत्र इति** ।। कर्तृशब्दः मुख्यशब्दः ।

## गूढकर्तृका टीकाटिप्पणी

नप्रज्ञानघनमिति ।.........[१]। कालाज्ञानादिसहितं जीवस्वरूपमेव प्रज्ञापयति नात्मानं नपरांश्च प्रज्ञापयति । तुर्यस्तु न तथेत्यर्थः । न प्रज्ञमितीति । प्राज्ञः समाधौ ध्येयादिस्वरूपमेव प्रज्ञापयति आत्मानं परांश्च न प्रज्ञापयति । तुरीयस्तु न तथेत्यर्थः ।। **नात्मानमितीति** ।। यद्यपि पूर्वमन्त्रे रूपत्रयवैधर्म्यमुक्तम् । तथाऽपि प्रकारान्तरेण प्राज्ञाद्वैधर्म्यस्य

---

१ अत्र वाक्यं अस्पष्टं वर्तते ।

प्रतिपादनान्नास्य गतार्थता । एवं श्रुतावपीति बोध्यम् । प्राज्ञः आत्मानं स्वस्वरूपं नसंवेत्ति । अन्तर्णीतणिजन्तोऽयं शब्दः । जीवस्य नसंवेदयतीत्यर्थः । परानन्यान् जीवांश्च नसंवेत्ति सत्यंच नसंवेत्ति । अनृतंच नसंवेत्ति । किञ्चन अन्यत् किमपि गृहादिकं न संवेत्ति । किंचन किंचित् जीवसुखकालाज्ञानादिकं संवेत्ति संवेदयतीत्यावृत्त्या योज्यम् । तुरीयरूपंतु मुक्तौ सदा तत् सर्वदृक् णिजन्तोऽयम् । तेषां मुक्तानां सर्वं योग्यं प्रदर्शयतीत्यर्थः ।

## प्रकाशिका

तत्सरणात्सदेति वदता सृ गताविति धातोः सरस्सरणमनुसरणं, तद्वती सरस्वतीति व्युत्पत्तिः सूचिता । सरोवाचकसरःशब्दवदयमपि शब्द इति ज्ञेयम् । अयोग्यजीवेषु स्वरूपभूतसुखाभावेन दुःखाभाव एव सुखभ्रान्तिरिति सूचनाय "सुखं वाऽपी"त्युक्तम् । सर्वदृक् सदेत्यत्र मुक्तौ मुक्तानां सर्वं दर्शयतीति सर्वदृक् । तर्हि कर्तृशब्दः कथमित्यत आह ।। **स्वतन्त्रे इति** ।। "प्राज्ञस्यावेदनं यथे"त्यस्य जीवगतावेदनं प्रति प्राज्ञः किञ्चन न संवेत्तीत्यकर्तृप्रयोगः तथाऽत्रापीति भावः ।

## भाष्यविवृतिः

न प्रज्ञानघनं न प्रज्ञमित्युक्ते वैधर्म्ये मन्त्रोऽधिजगे ।। **नात्मानमिति** ।। आत्मानं परमात्मानं न परांश्चैव जीवकालतमो विना सुप्त्यवस्थां सुखं चापि विना नान्यत् प्रदर्शयेत् प्राज्ञः। तुरीयस्तु सर्वदृक् मुक्तौ सर्वं दर्शयेत्। तर्हि सर्वं दर्शयतीति वक्तव्यं । न वक्तव्यं । "नात्मानं ......प्राज्ञः किञ्चन संवेत्ति"इति प्रयोजकेऽपि कर्तृशब्दप्रयोगात् । युज्यते च । अत एव भाष्ये "स्वतन्त्रे कर्तृशब्दः स्यात्"इति । अत्र कर्तृशब्दः कारकोपलक्षणः । तेन वद्धेति कर्मकारकसङ्ग्रहः । "सर्वदृक् - वेत्ति" शब्दादेरन्तर्णीतणिजर्थता। [१]अथ प्रतिग्रहेष्टयादौ गृण्हीयादिति प्राक्ष्यत्[२]।

## भाष्यार्थरत्नावलिः

नाप्रज्ञमिति तुरीयस्य प्राज्ञवैलक्षण्यमुक्तं । किं तत् प्राज्ञस्याप्रज्ञत्वं

---

१ यथा इति पाठेन भाव्यमितिभाति। २ प्राख्यत्-इति पाठेन भाव्यमितिभाति ।

तद्वैलक्षण्यं तुरीयस्येत्याशंकापरिहाराय मंत्र उदाह्रीयते ।। **नात्मानमिति** ।। प्राज्ञ आत्मानं स्वात्मानं नैव संवेत्ति परात् जीवानन्यांश्च न संवेत्ति । किंचन किमपि सत्यं नित्यं न संवेत्ति । "सदातनं सत्यमिति नित्यमेवोच्यते बुधैः" इत्यन्यत्रोक्तेः । अनृतमनित्यमपि न संवेत्ति । "अनृतंपरिणामियत्" इत्यन्यत्रोक्तेः । तत्तुरीयं सदानियमेन सर्वदृगित्यर्थः । सच न संवेत्ति सर्वदृगित्यनयोः प्रतीतार्थं वारयन् व्याचष्टे ।। **नात्मानमिति** ।। किंचित् किमपि सत्यमनृतंचेत्यन्वयः । ईषदपि इति वा । कस्याप्यनृतत्वे घनप्रज्ञ इत्युक्तिविरोधः । औत्तरिकानुस्मृतिसिद्धसौषुप्तिकानुभवविरोधश्चेत्यत अपवादमाह ।। **जीवेति** ।। घनोजीवस्तमोवृतः । "तन्मात्रस्य सकालस्य घनप्रज्ञः प्रदर्शनादि"ति जीवकालतमःप्रदर्शकत्वस्य घनप्रज्ञशब्दार्थतयोक्तत्वा-दुपनिपद्येवापवादेऽतरंगज्ञापकसद्भावात् । सुप्त्यवस्थासुखप्रज्ञापकत्वस्य मानांतरगम्यत्वादिद्विवचनाग्रहणं ।

ननु तुरीयोपि संसारे न प्रदर्शयतीत्यत उक्तं ।। **मुक्ताविति** ।। स्वनिय-म्यावस्थायां प्राज्ञोन संवेदयति । तुरीयस्तु स्वावस्थायां दर्शयतीति वैलक्षण्यमिति भावः । ननु न संवेत्ति सर्वभुगिति कर्तरि श्रुतः शब्दः कारयितरि कथं प्रयुज्यत इत्यत इममेव प्रयोगं दृष्टांतीकृत्य स्वातंत्र्यविव-क्षया कारयितर्यपि कर्तृशब्दो ब्रह्मतर्के समर्थित इत्याह ।। **स्वतंत्र इति** ।। स्वतंत्रः खलु कर्ता । स्वातंत्र्यं खलु ईश्वरे कारयितरि मुख्यं । तथाच क्रियास्वतंत्रे कर्तृवाचकशब्दःस्यात् । तद्यथा मांडूके असंवेदयितुः प्राज्ञस्यैव स्वातंत्र्यविवक्षया न संवेदयतीत्यवेदनमुक्तम् । यथाच सर्वप्रदर्शक एव तुरीये सर्वदृगिति सर्वदर्शनमुक्तमित्यर्थः ।

## पदार्थदीपिका

नप्रज्ञानघनमित्युक्तं प्राज्ञाद्वैधर्म्ये संमतितयोदाहृतं नात्मानमिति मंत्रं प्राज्ञः किंचन संवेत्तीत्यस्यापवादप्रदर्शनपूर्वकं प्रमाणेनैव व्याचष्टे ।। **नात्मा-नमिति** ।। स्वस्वरूपमित्यर्थः । परान् वक्ष्यमाणजीवकालादिव्यतिरिक्तान् पदार्थान्। संवेदयेदित्यनेन संवेत्तीत्येतत् णिजंततया व्याख्येयमिति सूचयति। जीवकालाभ्यां सहितं तमः जीवकालतमः प्रदर्शयेत् । सुप्ताविति शेषः ।

नाप्रज्ञमित्युक्ते सर्वज्ञानप्रदत्वे संमतितयोदाहृतं तुर्यं तत्सर्वदृक्सदेति मंत्रं व्याचष्टे ।। **सर्वत्विति** ।। स्वस्वरूपादिकं सर्वं योग्यमित्यर्थः । दर्शयेदिति वचनेन सर्वदृगित्येतदपि णिजंतमित्युक्तं भवति ।

ननु बंधके बद्धशब्दः तथाऽसंवेदयितरि नसंवेत्तीति कर्तृशब्दः तथा सर्वप्रदर्शयितरि सर्वदृगिति च कर्तृशब्दः कस्मात्प्रयुज्यते । अनुशासनाभावादित्यत आह ।। **स्वतंत्र इति** ।। "स्वतंत्रः कर्तेति"वचनात् क्रियायां यःस्वतंत्रः तस्मिन्कर्तृशब्दः स्यात् कर्तेति मुख्यः कर्तृशब्दप्रयोगः स्यात् । अत्रैतदुपनिषदुक्तमेवोदाहरणं दर्शयति ।। **प्राज्ञस्येति** ।। यथाऽसंवेदयितुः प्राज्ञस्य नसंवेत्तीत्यसंवेदनक्रियां प्रति मुख्यतः कर्तृत्वं कथ्यते । इतरेपामसंवेदनरूपक्रियाप्रदाने प्राज्ञस्यैव स्वातंत्र्यात् । तथाच सर्वप्रदर्शके तुरीये सर्वदृगिति सर्वविषयकदर्शनक्रियां प्रति मुख्यतः कर्तृत्वमुच्यते । इतरेषां दर्शनक्रियाप्रदाने तुरीयस्यैव स्वतंत्रत्वादित्यर्थः । तथा च ब्रह्मतर्कवाक्ये "स्वतंत्रे कर्तृशब्दः स्यादि"ति स्वोक्तार्थे दृष्टांतत्वेनैतद्वाक्योक्तप्रमेयस्योपादानात्संवेत्ति सर्वदृगितिपदद्वयं णिजंतत्वेनैव व्याख्येयमिति भावः। एवं बंधनरूपक्रियायां ईश्वरस्यैव स्वतंत्रत्वेन बंधस्य तदधीनत्वात् तदधीनत्वादर्थवदिति न्यायेन बद्धशब्दप्रयोगोऽपि युक्त इत्यवगंतव्यम् ।

## उपनिषत्

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ।।**

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।**
**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ।।**

## भाष्यम्

"निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा ।
यथा भृत्ययुतः स्वामी नह्यज्ञानं परात्मनः ।।" इति च ।

"अभेदमपि तद् ब्रह्म बहुरूपं विशेपतः ।
करोति न करोतीति व्यवहार्यं स्वशक्तितः ।।" इति च ।

न संवेदयतीत्यस्वीकारे 'तुर्यं तत् सर्वदृक् सदा' 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति च विरुद्धम् । द्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः ।

"द्वैतं न ग्राहयेत् तुर्यो नच प्राज्ञः कथञ्चन ।
द्वैतग्रहणबीजं तु निद्रा प्राज्ञं समाश्रिता ।।" इति प्रकटश्रुतिः ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - अद्वैतमित्युक्ते प्राज्ञतुरीययोः साधर्म्ये मंत्रं पठति ।। **द्वैतस्येति** ।। द्वैतस्य देहादिविपये[1] स्वातंत्र्यस्याग्रहणं तद्ग्रहणाहेतुत्वं प्राज्ञतुरीययोः समं। नात्मानमित्यत्र प्राज्ञात्तुरीयस्य वैधर्म्यमुक्तं। प्रकारांतरेण वैधर्म्यमाह ।। **बीजेति** ।। बीजनिद्रा मूलाविद्या ।

प्रकारांतरेण विश्वादीनां साधर्म्यवैधर्म्ये निरूपयंस्तेभ्यस्तुरीयस्य वैधर्म्यमाह ।। **स्वप्नेति** ।। स्वप्नो भ्रमः । निद्रा अविद्या । अस्वप्ननिद्रया स्वप्नं विना निद्रया । अत्र विश्वादीनां कार्यकारणबद्धत्वादिकं जाग्रदाद्यवस्थापन्नजीवबंधकत्वादिति द्रष्टव्यं ।

**भाष्यार्थः** - बीजनिद्रायुत इत्यादि प्राज्ञादीनामविद्यादिवशत्वार्थप्रतीतिं निवारयन्व्याचष्टे ।। **निद्रेति** ।। प्राज्ञः किंचन नसंवेदयेत्तुरीयः सर्वं संवेदयेदित्युक्त्या प्राप्तविरुद्धधर्माधिकरणत्वेन तयोः प्राप्तां भेदशंकां निवारयति ।। **अभेदमिति** ।। सर्वदृगिति सर्वं तु दर्शयेदिति व्याख्यातं । यथास्थितांगीकारे बाधकं चाह ।। **नसंवेदयतीति** ।। तुर्यं तत्सर्वदृगिति ज्ञानमुक्त्वा प्राज्ञतुरीययोरग्रहणं ज्ञानराहित्यं तुल्यमित्युक्तं तद्विरुद्धमित्यर्थः । अस्तु सर्वदृक्सर्वप्रदर्शक इति । द्वैतस्याग्रहणं तुल्यमित्यस्य कोर्थ इत्यत आह ।। **द्वैतेति** ।। उक्तमर्थं प्रमाणेन द्रढयति ।। **द्वैतमिति** ।। बीजनिद्रायुत इत्यंतन्निद्रायुतास्त्विति व्याख्यातमपि स्पष्टं व्याचष्टे ।। **द्वैतेति** ।

## गूढकर्तृका टीकाटिप्पणी

।। **अद्वैतमित्युक्त इति** ।। पूर्वमद्वैतशब्दार्थत्वेन तुरीयस्य मिथ्याज्ञाननिवर्तकत्वस्य मिथ्याज्ञानाजनकत्वस्य चोक्तत्वात् प्राज्ञस्यापि तत्साम्याद्

---

१ व्याख्यानं देहादेरिति गृहीतं।अतः देहादेरिति पाठान्तरेण भाव्यमितिभाति ।

अद्वैतमित्युक्त इत्युक्तम् । उक्तप्राय इत्यर्थः । अन्यथोत्तरमंत्रस्यासाङ्गत्यापत्तेरिति ध्येयम् । अन्यथाप्रत्ययो द्वैतमिति वचनाद् द्वैतस्यान्यथाज्ञानस्येत्यन्यथाप्रतीतेरन्यथाव्याचष्टे।। **द्वैतस्य देहादेर्विषये स्वातंत्र्यस्येति** ।। अनेन द्वैतस्येति विपयिणः स्वातन्त्र्यस्य विषयस्योपलक्षणमित्युक्तं भवति । किं विपये स्वात्न्त्र्यमित्यतो योग्यतया देहादेर्विषय इत्युक्तम्। तद्ग्रहणाहेतुत्वं । देहादिविपयकाहंममेत्यादिस्वातन्त्र्यभ्रमाजनकत्वमित्यर्थः । एतेनाग्रहणमित्यस्याग्राहकमित्यर्थमभिप्रेत्य तदग्रहगणाहेतुत्वमित्यवगन्तव्यम् । तदग्रहणाहेतुत्वमित्युपलक्षणम् । ग्रहणनिवर्तकत्वमपि अग्रहणशब्दार्थत्वेन ग्राह्यम् । ग्रहणस्य ध्वंसोऽग्रहणमिति व्युत्पत्तेः । उपलक्षणं कुत इतिचेत् शिवमद्वैतमिति तुरीये श्रुतस्याद्वैतपदस्य "अन्यथाप्रत्ययो द्वैतमि"ति भाष्ये मिथ्याज्ञाननिवर्तकत्वरूपस्यार्थस्योक्तत्वात् । अस्य च मन्त्रस्याद्वैतमित्युक्तार्थे प्रमाणत्वात् ।

ननु भाष्येऽद्वैतपतेन भ्रमाजनकत्वरूपार्थाप्रतिपादने कथमर्थद्वयेऽयं मन्त्रः प्रमाणमितिचेत् न । मन्त्रानुसारेण भाष्येऽपि भ्रमाजनकत्वरूपार्थस्योपलक्षणीयत्वात् । अन्यथा भाष्यमन्त्रयोर्भिन्नार्थत्वेन मन्त्रस्योक्तार्थे विसंवादापत्तेः । तथाच प्राज्ञतुर्ययोः द्वैतस्य देहगेहादिविषये अग्रहणं अहंममेत्यादिस्वातन्त्र्यभ्रमाजनकत्वं तद्भ्रमनिवर्तकत्वं च तुल्यं सममित्यर्थः। ननूभयोः कथं भ्रमाजनकत्वं भ्रमनिवर्तकत्वं च कथमिति चेदित्थं । प्राज्ञस्य तावत् "प्राज्ञः कारणबद्धस्तु" इत्यनेन कारणमात्रबद्धत्वोक्त्या भ्रमाजनकत्वस्य सिद्धत्वात् । सुप्त्यवस्थाजाग्रद्भ्रमस्य निवृत्तेः भ्रमनिवर्तकत्वस्यापि साक्षिसिद्धेः । "द्वौतु तुर्ये नसिद्ध्यत" इत्युक्त्या तुरीयस्याप्यबद्धत्वेन भ्रमाजनकत्वस्य प्रपञ्चोपशममित्यनेन सर्वानिष्टनिवर्तकत्वोक्तेः भ्रमनिवर्तकत्वस्यापि सिद्धेरिति ।। **बीजेतीति** ।। बीजनिद्रया देहगेहादौ स्वातन्त्र्यभ्रममूलभूताविद्यया । युतः तत्वप्रदः । अविद्यया बन्धक इति यावत् । सा अविद्या तया बन्धकत्वमिति यावत् ।

।। **विश्वादीनां साधर्म्यवैधर्म्ये निरूपयन्निति** ।। विश्वतैजसयोः साधर्म्यं ताभ्यां प्राज्ञस्य वैधर्म्यं च निरूपयन्नित्यर्थः ।। **स्वप्नेतीति** ।। उभाभ्यां

वन्धकावित्यर्थः ।। **अस्वप्ननिद्रया** ।। अस्वप्नाच सा निद्राचेति कर्मधारयः। युत इति सम्बन्धः । निश्चिता वेदार्थनिश्चयवन्तः सज्जनाः । तुर्ये निद्रां निद्रया बद्धत्वं न पश्यन्ति। भ्रमाबन्धकत्वे सति अविद्ययैव बन्धक इत्यर्थः । ननु सर्ववन्धविनिर्मुक्तस्य विश्वादिरूपस्य भगवतः कथं कार्यकारणबद्धत्वादिकमित्यत आह ।। **अत्रेति** ।। अस्मिन् प्रकरणे विश्वादीनां वन्धनकर्तृत्वमेवोच्यते न तत्कर्मत्वमिति भावः ।

## प्रकाशिका

'बीजनिद्रायुतः' इत्यत्र प्राज्ञ एव भ्रमबीजभूतनिद्रायुत इति प्रतीयते । अत आह भाष्यकारः ' निद्रायुतास्तु विश्वाद्यास्तदधीना यतोहि सा' इति । 'न संवेदयतीत्यनङ्गीकारे' इत्यत्र न संवेत्तीति शब्दस्य न संवेदयतीत्यर्थांगीकारे । उपलक्षणं चैतत् । सर्वदृक्शब्दस्य सर्वदर्शकत्वार्थांगीकारे चेत्यपि द्रष्टव्यम् । 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति सर्वदृक्त्वेनोक्ततुरीये पुनर्द्वैताग्रहणाख्यादर्शनकथनं विरुद्धमित्यर्थः । तर्हि भवतामपि सर्वं दर्शयति, द्वैतं न दर्शयतीति कथं न विरोध इति चेन्न । अस्माभिर्मुक्तौ तुरीयो देवः सर्वं दर्शयतीत्यर्थाङ्गीकारादिदानीं सर्वं न दर्शयतीत्यर्थाङ्गीकारेणाविरोधात् । मुक्तौ च द्वैतपदोक्तभ्रमस्यैवाभावात् विद्यमानं सर्वं दर्शयतीत्यर्थस्य नितरामविरोधः । न हि शशविषाणं न दर्शयतीत्येतावता सर्वदर्शयितृत्वस्य विरोधं कोऽपि शङ्कते । परस्य तु संसार एवोभयोः कथनाद्दुष्परिहारो विरोध इति भावः । 'प्राज्ञं समाश्रिता' सुप्त्यवस्थाप्रवर्तकप्राज्ञाधीनेत्यर्थः ।

## भाष्यविवृतिः

अद्वैतमित्युक्ताद्वैतत्वं प्राज्ञतुर्ययोः साधारणमित्यत्र मन्त्रोऽधिजगे ।। **द्वैतस्येति** ।। द्वैतस्याग्रहणं द्वैतग्रहणाकारणत्वं तुल्यम् । अत एव "द्वैतं न ग्राहयेत् तुर्यो नच प्राज्ञः कथञ्चने"ति प्रकटश्रुतौ अभ्यधात् । नात्मानमित्यत्र प्राज्ञतुरीययोर्वैधर्म्यमुक्तं प्रकारान्तरेण वैधर्म्यं श्रूयते ।। **बीजेति** ।। प्राज्ञो बीजनिद्रायुतः मूलविद्यानियामकः । एवं विश्वदीनामपि निद्रायुतत्वं यदभिधीयते तत्स्वामित्वेनैव । भृत्ययुतः स्वामीति यथा । नहि परमात्मनोऽज्ञानं सम्भवति ।

## भाष्यार्थरत्नावलिः

अद्वैतं चतुर्थमिति तुरीयस्य अद्वैतत्वमुक्तं । तच्चान्यथाज्ञाननाशक्तत्वमिवान्यथाज्ञानाकारणत्वं च विवक्षितं । अन्यथाज्ञानाकारणत्वं च नप्राज्ञाव्द्यावर्तकमिति मन्तव्यं । तस्य सुप्तौ देशकालाद्यतिरेकेणान्याप्रतिभासकत्वादिति भावेनाद्वैतस्योभयत्र साम्ये मन्त्रः पठ्यते ।। **द्वैतस्येति** ।। द्वैतस्य पूर्वोक्तव्युत्पत्या मिथ्याज्ञानस्याग्रहणमग्राहकत्वं जीवो यथा नगृण्हीयात्तथा कतृत्वं प्राज्ञतुरीययोरित्युभयोस्तुल्यं । तत्र विशेष उच्यते ।। **बीजेति** ।। द्वैतपदोदितभ्रमबीजाविद्यायुतः प्राज्ञः। सा भ्रमबीजाविद्यापि तुर्ये नविद्यत इत्यर्थः । प्राज्ञस्य तुरीयवद् भ्रमकर्तृत्वाभावेपि भ्रमबीजाविद्यायाः जीवाश्रितायाः तन्नियम्यत्वमस्तीति विशेषइति भावः । नन्वयं मन्त्रः 'प्राज्ञःकारणबद्धस्तु द्वौतु तुर्ये नसिध्यतः' इत्यनेन गतार्थः । तत्रापि प्राज्ञो विद्याबद्ध एव न भ्रमबद्धः तुरीयस्तु तया बद्धइत्येतयोर्भ्रमाबद्धत्वे साम्यस्योक्तत्वादितिचेन्न । भ्रमप्रयुक्तबन्धहेतुत्वमुभयोर्नास्तीत्युक्तम् । अत्रतु भ्रमं प्रत्येव हेतुत्वं तुल्यमुच्यत इति भेदात् ।

यथा द्वैतशब्दितमिथ्याज्ञानाहेतुत्वं प्राज्ञतुरीययोस्तुल्यमेवं विश्वतैजसयोरपि किमित्यत उच्यते।। **स्वप्नेति** ।। निश्चितास्तत्वनिश्चयवन्तो ज्ञानिनः। आद्यौ विश्वतैजसौ, स्वप्नो भ्रमः, निद्राऽविद्या, तद्युतौ । प्राज्ञस्तु स्वप्नंविना अविद्यया युतइति पश्यन्ति । तुरीयेतु भ्रममविद्यां विनैव पश्यन्तीत्यर्थः । यद्वा उक्तार्थे ज्ञानिप्रत्यक्षमेवानेन मन्त्रेण प्रमाणमुक्तं । अत एव निश्चिताः पश्यन्तीत्याद्युक्तं । अत्र विश्वादीनां निद्राशब्दिताविद्यावत्वप्रतीतेः प्रमाणेन यथावद्व्याचष्टे ।। **निद्रायुताइति** ।। कार्यकारणबद्धावित्यत्र विश्वतैजसयोः भ्रमाविद्याभ्यां बद्धत्वं । प्राज्ञस्याविद्यया बद्धत्वं । तुरीयस्य वन्धकत्वं । नात्मानमित्यत्र प्राज्ञस्याप्रदर्शकत्वं । तुरीयस्य प्रदर्शकत्वं । द्वैतस्याग्रहणमित्यादौ भ्रमकर्तृत्वं । तदकर्तृत्वमित्यादिवैलक्षण्योक्त्या रूपेषु वहुत्वोक्त्या भेदः प्रतीयते तां वारयत्यभेदमिति। तद्ब्रह्माभेदं भेदरहितमपि इन्द्रार्जुनादिवद्विशेषरहितमपि विशेषतो स्वशक्तितोऽचिन्त्यशक्तितश्च वहुरूपं करोति नकरोतीति व्यवहार्यंचेति योजना । "निर्विशेषोपि

भगवानंश्चतुर्धा समुदीरितः" इत्युक्तत्वात् । "एकोपिनिर्विशेषोपि चतुर्धा-व्यवहारभाक्" इति वक्ष्यमाणत्वाच्चेन्द्रार्जुनादिवद्विशेषराहित्यं पुनरचिन्त्यश-क्तिनिर्वाह्यविशेषवत्त्वं चावगम्यते । विशेपवैचित्र्यविवेचनं विशेषाचिन्त्य-शक्त्यन्यतरवैय्यर्थशंकापरिहारविचिन्तनं विशेषस्वरूपनिर्धारणादिकं च गौरवभयान्नेह कृतं । नसंवेत्तीत्येत् प्रमाणेन नसंवेदयेदिति व्याख्यातं । सर्वदृगिति च सर्वंतु दर्शयेदिति व्याख्यातं । यथास्थित्यंगीकार्ये बाधकं-चाह ।। **नसंवेदयतीत्यस्वीकारइति** ।। इतिशब्द आद्यर्थे । नसंवेत्तीत्यादेर्नसंवेदयतीत्याद्यर्थास्वीकारे प्राज्ञः स्वयमज्ञः तुरीयः सर्वज्ञइति प्रतीतार्थस्यैवांगीकार्ये तुरीयं सर्वदृगिति तुरीयस्याज्ञात्प्रज्ञाद्वैलक्षण्यमुक्त्वा द्वैतस्याग्रहणं तुल्यमिति द्वैतशब्दित प्रपञ्चाज्ञानं तुल्यमिति भवदीयार्थव-र्णनं विरुद्धं स्यादतस्तदविरोधायात्रापि नसंवेत्ति सर्वदृगित्यनयोः णिजर्थत्वं वर्णनीयमिति भावः । स्वमते द्वैतस्याग्रहणमित्यत्र द्वैतपदस्यान्यथाप्रत्ययो द्वैतमिति व्याख्याततत्वादग्रहणपदम- ग्राहकत्वार्थतया व्याचष्टे।। **द्वैताग्रहण कारणत्वमिति**।। अग्रहणमनुपादानं। यद्वा वक्ष्यमाणरीत्या द्वैतमन्यथा-कारः । तस्याग्रहणमज्ञानमिति योज्यं । उक्तमर्थं प्रमापयन् बीजनिद्रायुत इत्युक्तनिद्राकारणस्य बीजभूतेत्याशंकांच परिहरति ।। **द्वैतमिति** ।। द्वैतमन्यथाज्ञानमन्यथाकारोवा तस्य ग्रहणमन्यथाज्ञानस्वीकारः प्रतीतिर्वा ।

## पदार्थदीपिका

नात्मानमित्यादिना प्राज्ञतुरीययोर्वैधर्म्यं उक्त्वा प्रकारांतरेणापि वैधर्म्यं प्रतिपादयितुं प्रवृत्ते बीजनिद्रेति मन्त्रे प्राज्ञस्य मूलाज्ञानयुक्तत्वं प्रतीयते । तामपाकुर्वन्निद्रायुतत्वोक्तेरभिप्रायं प्रमाणेनैव दर्शयति ।। **निद्रायुता इति** ।। प्राज्ञस्योक्तं निद्रायुतत्वं विश्वतैजसयोरपि साधारणमित्याशयेन विश्वाद्या इत्युक्तं । सानिद्रा ।। **भृत्ययुत इति** ।। भृत्यस्य तदधीनत्वात् भृत्ययुतः स्वामीत्युच्यते यथेत्यर्थः । 'प्राज्ञः किंचन संवेत्ति तुर्यं तत्सर्वदृक्सदे'ति-विरुद्धधर्मप्रतिपादनेन प्रसक्तां भेदशंकां निराकरोति ।। **अभेदमपीति** ।। अभेदेपि भेदकार्यकारिरूपाद्विशेपतोऽभेदमपि अभिन्नमपि तद्ब्रह्म वहुरूप-मितिसंवंधः ।

ननुरूपाणामभेदे एतत्सर्वं तुरीयेण रूपेण नकरोति विश्वादिरूपेण करोतीति कथं व्यवहार इत्यतः सोपि विशेषशक्तित एवेत्याह ।। **करोति नकरोतीति** ।। स्वशक्तितः स्वाभिन्नविशेषशक्तित इत्यर्थः । अघटितघटनासामर्थ्यादितिवा । तुर्यं तत्सर्वदृगिति वाक्ये सर्वदृगित्येतत् सर्वं दर्शयेदिति व्याख्यातं । णिजंततामनंगीकृत्य व्याख्याने बाधकमाह ।। **संवेदयतीति** ।। सर्वदृगित्यस्य संवेदयतीत्यर्थास्वीकार इत्यर्थः । विद्ज्ञाने दृशिर्प्रेक्षण इति धात्वोरेकार्थत्वात् दर्शयतीत्यस्वीकार इति वक्तव्ये संवेदयतीत्यस्वीकार इत्युक्तमिति ज्ञातव्यं । तुरीयं सर्वदृगिति तुरीयस्य सार्वज्ञमुक्त्वाऽग्रहणं तुल्यमिति तुरीयस्याज्ञानोक्तेर्विरुद्धत्वं स्यात् । ज्ञानाज्ञानयोरेकत्र विरुद्धत्वादतो दर्शयेदित्येव व्याख्येयमित्यर्थः। दर्शयतीत्यस्वीकार इत्यपि क्वचित्पाठः ।

ननु प्राज्ञतुरीययोर्द्वैताग्रहणं वा कथमुच्यते । तयोरज्ञानाभावादित्यतस्तद्वाक्यं व्याचष्टे।। **द्वैतग्रहणेति** ।। प्राज्ञतुरीययोर्द्वैतस्य देहादिविषयस्वातंत्र्यस्य यद्ग्रहणं तद्विषयकं यज्ज्ञानं भ्रमरूपं तदकारणत्वं तुल्यमित्यर्थः । प्राज्ञं तुरीयं चप्राप्तानां देहादिविषयस्वातंत्र्यभ्रमो नभवतीति तदकारणमुभयोरिति भावः । द्वैतस्याग्रहणं तुल्यमित्येतद्द्वैतग्रहणाकरणत्वं तुल्यमित्यर्थ इति व्याख्यातं । तत्र प्रमाणं चाह ।। **द्वैतमिति** ।। नग्राहयेदित्युक्त्या द्वैतग्रहणाकारणत्वमिति व्याख्येयमिति सूचितं भवति । बीजनिद्रायुतः प्राज्ञ इत्येतत्प्रमापयति ।। **द्वैतग्रहणेति** ।। प्राज्ञंसमाश्रिता प्राज्ञाधीनेत्यर्थः ।

## उपनिषत्

**अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ।।**

## भाष्यम्

विपरीतज्ञनादपि विपरीतज्ञानान्तरं जायते ।।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - एवं विश्वादिकार्याकारित्वेनातिविलक्षणस्य तुरीयस्य स आत्मा सविज्ञेय इत्युक्ते दर्शनप्राप्ती कदा भवत इति जिज्ञासायामाह

।। **अन्यथेति** ।। अन्यथा गृह्णतः अहंममेत्यादिभ्रामकयुक्तस्य स्वप्नः स्वप्नदर्शित्वादिभ्रमो भवति तत्वमजानतो निद्रा मूलाविद्या भवति । तयोर्विपर्यासे आवर्तने क्षीणे सति तुरीयं पदमश्नुते प्रप्नोति ।

**भाष्यार्थः** - अन्यथागृह्णतः स्वप्न इत्येतदर्थाप्रतीतेर्व्याचष्टे ।। **विपरीतेति** ।।

## गूढकर्तृका टीकाटिप्पणी

।। **विश्वादिकार्याकारित्वेनेति** ।। तुरीयस्याबद्धत्वस्योक्तत्वादितिभावः ।। **सआत्मासविज्ञेय इतीति** ।। विज्ञेयपदेनोपलक्षणत्वेन प्राप्तेरप्यभिप्रेतत्वादितिभावः ।। **अहं ममेत्यादिभ्रमयुक्तस्येति** ।। देहगेहादौ भगवदधीने अहंममेत्यदिजाग्रद्भ्रमवत एव अहं स्वप्नादिद्रष्टेत्यदिजाग्रद्भ्रमान्तरं भवतीत्यर्थः । अथवा अन्यथा गृण्हतः उक्तप्रकारेण जाग्रदभ्रमवतः स्वप्न उक्तप्रकारेण स्वाप्नभ्रमो भवतीति कार्यकारणबद्धौ तावित्यादि भाष्यतत्त्वप्रकाशिकाभावबोधानुसारेण व्याख्यानान्तरमपि द्रष्टव्यम् । अन्यथा गृण्हत इतिवाक्यम्य एतद्भाष्यकारैरुपरिष्टात् विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायत इति सामान्यतो व्याख्याततत्वात् ।। **तत्त्वमजानत इति** ।। भगवत्स्वातन्त्र्यादिरूपवस्तुयाथत्म्यज्ञानाभाववत इत्यर्थः ।। **निद्रा मूलाविद्याभवतीति** ।। अयंभावः । संसारहेतुभूतानादिभावरूपाविद्यायाः सर्वदा सत्वेऽपि भगवत्स्वातन्त्र्यरूपतत्त्वज्ञानाभावे अविद्याकार्यदुःखादिकं भवति। तदभावे तत्कार्यदुःखाद्युपमर्दो भवतीति ।। **तयोरिति** ।। अविद्याभ्रमयोः । आवर्तने पुनः पुनरावर्तने क्षीणे नष्टे । तुरीयनामकं पदं भगवत्स्वरूपं प्राप्नोति साक्षात्कारद्वारा प्राप्नोतीत्यर्थः ।

## प्रकाशिका

'अन्यथा गृह्णत' इति हेतुगर्भविशेषणबलात् स्वप्ने वासनामयत्वेन सूक्ष्मघटेपु स्थूलघटत्वभ्रमः प्राग् भवतीति सिद्ध्यति । एवमन्यथा गृह्णतः स्वप्नद्रष्टुः स्वप्ने जाग्रद्दृष्टपदार्थ एवायमिति भ्रमान्तरं च जायते । 'नीञ् प्रापणे' इति धातोः गत्यर्थानां च ज्ञानार्थत्वात् स्वपतः वस्तुतत्त्वमजानतः नुः योऽनुभवः स स्वप्न इति व्युत्पत्त्या भ्रमान्तरं च भवतीति भावेनाह

भाष्यकारो ।। **विपरीतज्ञानादिति** ।। इदं च स्वप्नस्य नियमेन भ्रमद्वयहेतुत्वादेतद्विमोचने महान् प्रयत्नः कर्तव्य इति सूचनार्थम् ।

## भाष्यविवृतिः

ननु ब्रह्मण एकत्वेन न संवेत्ति सर्वदृगित्यादि ज्ञानकर्तृत्वाकर्तृत्वादि कथं । अथेदमपि ब्रह्मविशेषतो बहुरूपम् अतो करोति नकरोतीति व्यवहारगोचरो भवति । एवं प्राज्ञादिरूपाणामेकत्वावगतौ न संवेत्ति सर्वदृगित्यनयोः प्राज्ञतुरीयगतयोरन्तर्गतण्यर्थत्वं नाभिदध्याः । तर्हि प्राज्ञाभिन्नस्य तुरीयस्य सर्वदृक् नसंवेत्ति इत्येतद्विरुद्धम् । एवं प्राज्ञस्यापि तुरीयाभिन्नस्य नसंवेत्ति सर्वदृगिति विरुद्धम् । एवमेकस्य तुरीयस्यैव सर्वदृक्त्वं द्वैतस्याग्रहणं च विरुन्धीयाताम् । स्वप्ननिद्रायुतौ भ्रमाविद्यानियामकौ विश्वतैजसौ । प्राज्ञस्तु भ्रमयुक्ताविद्याया न नियामकः । निद्रां अविद्यां भ्रमं च तुरीये निश्चिता न पश्यन्ति । तर्हि कथमेतादृशं तुरीयं वयमश्नुवीमहीत्यतस्तत्प्राप्तिप्रतिबन्धकभ्रमाविद्याया निवर्तकतत्त्वज्ञानसम्पादनेन तदावर्तने क्षीणे सति पदमिदं तुरीयमश्नुवीध्वमित्यभिधत्ते ।। **अन्यथेति** ।। अन्यथा गृण्हतः विपरीतं जानतो विपरीतज्ञानान्तरं जायते ।

## भाष्यार्थरत्नावलिः

बीजनिद्रायुतावाद्याविति विश्वतैजसयोरुभयोरपि भ्रमयुक्तत्वमुक्तं तयोरवान्तरं कोविशेषः। निद्राच कियत्पर्यन्तमनुवर्तते । सर्वभावानां देव इत्युक्ता तुरीयप्राप्तिश्च कदा भवतीत्याशंकापरिहारायोच्यते ।। **अन्यथेति** ।। अत्र अन्यथाग्रह्णतो भ्रमयुक्तस्य स्वप्नोभवतीति स्वप्नस्य सर्वस्य भ्रमकार्यत्वं प्रतीयते । तदयुक्तं यथार्थज्ञानादपि स्वप्नदर्शानादित्यतः स्वप्नपदं विपरीतज्ञानपरत्वेन व्याचष्टे ।। **विपरीतेति** ।। ततश्चायं मन्त्रार्थः । अन्यथागृह्णतो जाग्रत्यहं ममेत्यादिभ्रमयुक्तस्य स्वप्नेऽहं ममेत्यादि भ्रमो भवति । तथाच जाग्रद्भ्रमः कारणं स्वप्नभ्रमः कार्यमिति विश्वतैजसयोः विशेषइति भावः । तत्वं ब्रह्मापरोक्षतो जानतः निद्रा विद्या भवति । तावत्पर्यन्तनिद्रानुवृत्तिरिति भावः । तयोर्भ्रमयोर्भ्रमनिद्रयोर्वा विपर्यासे व्यावर्तने क्षीणे तुरीयं पद्यतइति पदं स्वरूपं अश्नुते प्राप्नोतीति । अविद्यायाःसृष्टिकालवृत्तिलाभविवक्षया वर्तनं बोद्ध्यं ।

## पदार्थदीपिका

नन्वेतादृशस्य तुरीयस्य प्राप्तिः कदेत्याशंकापरिहारायान्यथा गृह्णत इति मंत्रः प्रवृत्तः । तस्यायमर्थः । तत्वं स्वतंत्रतत्वं भगवंतमजानतःपुंसो यानिद्रा अविद्याऽस्ति तया अन्यथागृह्णतः अहं ममेत्यादिजाग्रत्कालीनस्वातंत्र्यभ्रमयुक्तस्य स्वप्नःस्वप्नदर्शित्वं भ्रमो भवति । जाग्रदवस्थायांस्वातंत्र्यादिविषयकभ्रमजन्यसंस्कारेण जाग्रत्कालीनमिदमिति स्वप्नरूपो भ्रमो भवतीति । तदेतत्तात्पर्यमाह ।। **विपरीतज्ञानादिति** ।।

## उपनिषत्

**अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ।।**

## भाष्यम्

**"अनादिमायया विष्णोरिच्छया स्वापितो यदा ।**
**तया प्रबोधमायाति तदा विष्णुं प्रपश्यति ।।"**

**इति प्रकाशिकायाम् ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - तयोर्विपर्यासक्षयस्तत स्तद्दर्शनादिच किं कालाद्भवति नैवं । किं तर्हि भगवत्प्रसादादित्याह ।। **अनादीति** ।।

**भाष्यार्थः** - अनादिमायया अनाद्यज्ञानेनेत्यन्यथाप्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे ।। **अनादीति** ।।

## गूढकर्तृका टीकाटिप्पणी

शङ्कते तयोर्विपर्यासक्षय इति ।। किं कालाद् भवतीति सम्बन्धः । ततस्तयोर्विपर्यासक्षयानन्तरम् । तद्दर्शनादि च तुरीयदर्शनं तत्प्राप्तिश्चेत्यर्थः । परिहरति ।। **नैवमिति** ।। **अनादीतीति** ।। अनादीति तन्त्रम् । अनादेर्विष्णोरनादिमायया इच्छया स्वगुणाच्छादिकादिरूपया अविद्यया च सुप्तः स्वापितः संसारे निवेशितो जीवो यदा अनादिमायया भगवदिच्छया तत्प्रसादेन प्रबुध्यते भगवानेव स्वतन्त्रोऽन्यत्सर्वं तदधीनमित्यादिशास्त्रजन्य

परोक्षज्ञानवान् भवति । अज्ञानमिथ्याज्ञानविपर्यासक्षयवान् भवतीत्यर्थः । नन्वज्ञानादिनाशानन्तरमपरोक्षज्ञानं भवतीत्ययुक्तम् । "भिद्यते हृदयग्रन्थि-रि"ति श्रुतौ अपरोक्षज्ञानानन्तरमज्ञानादिनाशस्योक्तत्वाद् इतिचेत् । मैवम्। अपरोक्षज्ञानात् पूर्वं बाहुल्येनाज्ञानाद्यपगमस्य अपरोक्षज्ञानानन्तरं निःशेष-तोऽज्ञानाद्यपगमस्य श्रुतिद्वयाभिप्रेतत्वात् । अत एव "तस्मिन् दृष्टे सर्वसंशयाश्छिद्यन्ते" इत्युक्तम् । तदा तदनन्तरम् । अजं जननादिदुःख-नाशकम् । नजनयतीत्यज इतिव्युत्पत्तेः । अनिद्रमविद्यानाशकम् अस्वप्नं परापरवस्तुविषयकभ्रमनाशकम् । अद्वैतमेतद्भ्रमजनकस्य अहं ममेत्यादि-भ्रमस्य नाशकम् । यद्वा अजं जननादिशून्यम् । अनिद्रं विश्वादिरूपत्रयवद् अविद्यया बन्धकं नभवतीत्यर्थः । अस्वप्वनं विश्वादिरूपत्रयवन्मिथ्याज्ञानेन बन्धकं नभवतीत्यर्थः । अद्वैतं मिथ्याज्ञानोपलक्षितसर्वानिष्ठनाशकम् । तुर्यं वासुदेवम् । बुध्यते अपरोक्षतो जानाति ।।

## प्रकाशिका

'अनादि मायाया सुप्तः' यथाश्रुतार्थाङ्गीकारे जगतो मायाकल्पितत्वभ्रमः स्यादतः प्रमाणेनैव तां श्रुतिं व्याख्याति - **अनादिमायया विष्णोरिच्छयेति** ।

## भाष्यविवृतिः

ननु अनेन तत्वज्ञानादविद्यान्यथाज्ञाननिवृत्ती अर्थादभ्यधायिषातम् । इदं चानुपपन्नमिवाभाति । अविद्यान्यथाज्ञानयोः परमेश्वरेच्छानधीनयोः तज्ज्ञा-नेन तत्प्रसादेन वा निवृत्तेरयोगात् । नहि राजेच्छाधीनो निगडबन्धोऽ-मात्यज्ञानात्तत्प्रसादाद्वा निवर्तत इत्यतः अविद्यायाः परमेश्वरेच्छाधीनत्वमभि-दधानः परमेश्वर ज्ञानात्तन्निवृत्तिं ब्रवीति ।। **अनादीति** ।। सम्यक् शास्त्रपर्यालोचनजन्यदृढपरोक्षज्ञानो भवति तदा चाद्वैतादि लक्षणं विष्णुं प्रपश्यति तेन प्रसन्नेन विष्णुना निवर्तितबन्धोऽपि भवति ।

## भाष्यार्थरत्नावलिः

ननु तत्वशब्दितभगवदपरोक्षज्ञानं दुःसंपाद्यं अनादितः कामकर्माविद्या-दिभिः परिवृतस्य तदुदयानुपपत्तेरित्याशंका पराक्रियते।।**अनादिमाययेति**।।

अत्र अनाद्यविद्या मायाबद्धो जीवः यदाऽद्वैतोपदेशेन प्रबुध्यते तदाऽद्वैतं साक्षात्करोतीत्यन्यथा प्रतीतेः यथावद्व्याचष्टे ।। **अनादीति** ।। उत्पत्तिरहितत्वादनस्य मुख्यप्राणस्यादित्वाद्वाऽनादिर्विष्णुः । तस्य माययेच्छया स्वापितो जीवो यदा तयैवानादिमायया विष्णोरिच्छयाऽस्मिन्काले मोचयामीत्येवंरूपया प्रबुध्यते गुरुसंपत्या परोक्षनिश्चयं याति तदाऽजमुत्पत्तिरहितं. अनिद्रं अविद्यारहितं, अस्वप्नं भ्रमरहितं, अद्वैतमन्यथाज्ञाननिवर्तकं विष्णुं प्रबुध्यते पश्यतीत्यर्थः । एतदुक्तं भवति । स्यात्तदेवं यदिजीवस्य बंधः कामकर्माविद्यादिमात्रनिबंधनः स्यात् तदा ब्रह्मदर्शनं दुःसंपाद्यं । नचैवं किंत्वीश्वरेच्छैव मुख्यमावरणं । "ईश्वरेच्छा प्राथमिकी" इत्यादेः । तथाच "बन्धको-भगवानेव" "यदिप्रसन्नःस्यात्तदाकिंनामदुर्घटं"इति ।

## पदार्थदीपिका

नन्वनाद्यविद्याबद्धस्य जीवस्य जाग्रत्स्वप्नयोर्भ्रमयोर्विपर्यासक्षय एव कथं स्यात् इत्याशंकायां यदा सद्गुरूपेदशादिना भगवत्प्रबोधोदयस्तदानीमेवेत्याशयेनप्रवृत्तं अनादिमाययेति वाक्यं मायाशब्दस्यानिर्वचनीयाविद्यापरत्वप्रतीति निरासाय प्रमाणेनैव व्याचष्टे ।। **अनादीति** ।। तया तत्प्रसादेनेति यावत् । प्रबोधं श्रवणादिकं । आयाति प्राप्नोति गुरूपदेशेन । अद्वैतं बुध्यते तदेत्यस्यार्थः तदाविष्णुंप्रपश्यतीति ।

## उपनिषत्

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।।**

## भाष्यम्

**"तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।**
**वस्तुतोऽसौ नचैवास्ति परमस्य वशे यतः ।।**
**तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते ।**
**अतः स विद्यत इति ह्यङ्गीकारो भवेद्यदि ।**
**तथाऽपि भगवज्ज्ञानात् स निवर्तेदसंशयः ।।"**

इति ब्रह्मतर्के ।

**अद्वैतमनन्यथा ज्ञातं परब्रह्मादिवस्तु तत् । द्वैतं द्विधा ज्ञातमन्यथा ज्ञातमज्ञैः ।। परमार्थतः परमेश्वरात् । तस्यैव मायामात्रं तदिच्छया निर्मितम् । तदन्यथाज्ञानं तस्मात् तदिच्छयैव निबर्तते ।**

**'परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा ।**
**तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा ।**
**जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च ।।**

**परमार्थात् पराद् विष्णोर्जातमिच्छावशादनु ।**
**मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम् ।।**

**उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरच्युतः ।।' इतिच ।**

**अनन्यथा इतमवगतमद्वैतम् । द्वैतं वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञातमित्यर्थः ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - ननु अहंममेदमित्यादिस्वस्वामिभावसंबधरूपो बंधलक्षणो द्वितीयः प्रपंचो यदि जीवस्वभावः तर्हि कथमसौ भगवत्प्रसादादपि निवर्तेत मैवं । भगवदिच्छाधीनत्वात्तस्य भगवत्प्रसादात्तदपगमे तन्निवृत्त्युपपत्तेरित्याह ।। **प्रपंच इति** ।।

**भाष्यार्थः** - जगतो ज्ञाननिवर्त्यत्वपरत्वप्रतीतिं निवारयत्प्रपचो यदीति वाक्यं व्याख्यातुमपेक्षितपूर्वभाविप्रमेयमाह ।। **तन्वेति** ।। वस्तुतोसौ स्वस्वामिसंबंधः। अभिमानादज्ञानात् । तद्व्याख्याति।। **अत इत्यादिना** ।। अतः अज्ञानेन दर्शनात् । सदेहादौ स्वस्वामिसंबंधं विद्यत इत्यंगीकारे यदि भवेत्तथापि सभगवज्ज्ञानान्निवर्तेदिति योजना । स्ववाक्येन समग्रं वाक्यं योजयितुं जीवस्य प्रपंचाभिधेयदेहादावन्यथाज्ञानं किं निमित्तकं । यद्भगवत्प्रसादान्निवर्तेतेत्यतः प्राप्तद्वितीयार्धगतपदानामर्थमाह।। **अद्वैतमित्यादिना**।। अनन्यथाज्ञातं महद्भिरिति शेषः । योजयति ।। **तदिति** ।। तस्मात् तदिच्छानिर्मितत्वात् तदन्यथाज्ञानं तदिच्छयैव निवर्तते । एवं च सति समग्रवाक्ययोजना । जीवानां देहादौ यः स्वस्वामिसंबंधः । स स्वातंत्र्येण

नास्त्येव । यद्युक्तरूपप्रपंचो विद्येत विद्यतइत्यंगीक्रियते । तर्ह्यपि स परमार्थतो भगवत्प्रसादादिति यावत् । निवर्तेत । यद्युक्तरूपप्रपंचो जीवानां यथार्थस्तर्हि कथं स निवर्ततेत्यत उक्तमिदं द्वैतमिति । महद्भिर्द्वितीयेन प्रकारेणाज्ञातं ब्रह्मादिवस्तु अद्वैतं । इदं अज्ञैर्द्वितीयेन प्रकारेणज्ञातं द्वैतं । वस्त्वपेक्षया द्वितीयप्रकारेण ज्ञाने किं निमित्तमित्यतः उक्तं ।। **मायामात्रमिति** ।। जीवानां देहादौ भगवदिच्छया जातमन्यथाज्ञानमस्वाभाविकत्वान्निवर्ततइत्याकूतार्थः । स्पष्टेनच प्रमाणेन तद्वाक्यं व्याचष्टे ।। **परेणेत्यादिना** ।। परमार्थादित्युक्तं विवरीतुमुक्तमुत्तमत्वादुत्तमार्थत्वात् परार्थइति । अनेन प्रमाणेन द्वितीयार्धार्थ उक्तो भवति । तन्मिथ्याज्ञानं भगवज्ज्ञानान्निवर्तत इति प्रथमार्धार्थोवगंतव्यः । अद्वैतमनन्यथाज्ञातं द्वैतं द्विधाज्ञातं अन्यथाज्ञातमिति व्याख्यातं तत्कथं शब्दत आगतमित्यतस्तव्द्युत्पाद्य दर्शयति ।। **अनन्यथेति** ।। द्विधा इतमिति शेषः । तात्पर्यार्थमाह ।। **अन्यथा ज्ञातमित्यर्थ इति** ।।

## गूढकर्तृका टीकाटिप्पणी

स्वस्वामिभाव इति ।।..............................

**।। श्रीकृष्णार्पणमस्तु ।।**

**( एतावदेवोपलब्धम् । शिष्टमुच्छिन्नम् )**

## प्रकाशिका

पञ्चभूतात्मकदेहमधिकृत्य जीवस्य यः स्वीयत्वस्वस्वामित्वाख्यसंबन्धः सः प्रपंचपदेनोच्यत इति भावेनाह - **तन्वास्वस्वामिसम्बन्ध इति** । सः प्रपञ्चः यदि विद्येत वस्तुतो मम वशे विद्येतेति कस्यचिद्दुराग्रहोऽपि यदि विद्येतेति विद्यतेति पदस्यावृत्त्या योजनामभिप्रेत्याह ।। **अतस्स विद्यत इतीति** ।। विद्यतइति वदता आद्यो लिङ् "व्यत्ययो बहुलम् " इतिवचनाल्लडर्थो वेति सूचितम् । तथा सति विद्येत भवेदित्यर्थः सम्पन्नः । स निवर्तेत भगवदपरोक्षज्ञानानन्तरं तत्प्रसादापरपर्यायतदिच्छया निवर्तेत । न संशयः तत्र संशयो न । तत्र हेतुसूचनायाह ।। **मायामात्रमिति** ।। यतः

प्रपञ्चः मायामात्रं केवलभगवदिच्छया निर्मितत्त्वान्मायामात्रं । केवलं माया, कार्यकारणयोरभेदव्यपदेशस्य लाङ्गलेन जीवनमित्यादौ बहुलमुपलम्भात् । अतः परमार्थतः सर्वोत्तमभगवत्प्रसादादित्यर्थः निवर्तेतेति पूर्वेणान्वयः । तर्हीदानीमेव भगवदपरोक्षज्ञानमभिमाननिवृत्तिश्च कुतो नजायत इत्यत आह ।। **इदं द्वैतमद्वैतमिति** ।। अद्वैतं योगिभिः द्वैतं द्वितीयप्रकारतया ज्ञातं नेति व्युत्पत्त्याऽद्वैतपदवाच्यमितं देहाभिमानकारणीभूतं परं ब्रह्म द्वैतमधुना जीवैर्द्विप्रकारतया ज्ञातं वस्तुतत्त्वापेक्षया वैपरीत्येन ज्ञातमित्यर्थः । अत ईशनियतार्थभगवदपरोक्षज्ञानाभावान्न निवर्तत इति नञ आवृत्त्या योजना । यदात्विदं भगवत्स्वरूपं जीवानां श्रवणमननादिना अद्वैतमन्यथा ज्ञाते भवति तदा भगवदिच्छया निवर्तेत न संशय इति पदावृत्त्या योजना । इममेवार्थं सप्रमाणकमाह ।। **अद्वैतमित्यादिना** ।।

## भाष्यविवृतिः

नन्वहं ममेदमिति स्वस्वामिभावप्रत्ययलक्षणो भ्रमः यदि जीवस्यैव स्वभावः न परमेश्वराधीनः तदा कथमसौ भगवत्प्रसादादपि निवर्तेत । नैष दोषः । भगवदिच्छाधीनत्वात्तत्प्रसादात्तदपगमेऽन्यथाज्ञाननिवृत्तिद्वारा युज्यते तन्निवृत्तिरित्याह ।। **प्रपञ्चो यदीति** ।। तन्वा स्वस्वामिसम्बन्धः प्रपञ्चः शरीरिणो नास्ति । तन्वादिकस्य परमेश्वराधीनत्वात् । अथापि अभिमानाद् दृश्यत इति तन्वादिस्वस्वामिभावो विद्यत इति यद्यङ्गीकारस्तर्हि भगवज्ज्ञानान्निवर्तेतैव न संशयः । स्वस्वामिभावसम्बन्धप्रत्ययस्तदङ्गीकारोऽपि निवर्तेत । तन्वा स्वस्वामिभावलक्षणसम्बन्धप्रत्ययलक्षणभ्रमस्य निमित्तमन्यथाज्ञानं वदन् तस्यान्यथाज्ञनस्य परमेश्वराधीनत्वात् परमेश्वरेच्छयैवान्यथाज्ञाननिवृत्त्या स्वस्वामिभावलक्षणसम्बन्धप्रत्ययलक्षणभ्रमनिवृत्तिं निदर्शयति ।। **मायामात्रमिति** ।। द्वि द्वितीयेन प्रकारेण अन्यथेति यावत्। इतमवगतं द्वीतं द्वीतमेव द्वैतं न द्वैतम् अद्वैतम् अनन्यथेतमवगतमद्वैतमिति यावत् । परब्रह्मादिवस्तु यदस्ति तद् द्वैतं द्विधाज्ञातम् । अन्यैरन्यथा ज्ञातं न स्वातन्त्र्येण किन्तु परमार्थतः । अव्ययो विष्णुरुत्तमत्वात्परमार्थ उच्यते तस्मात् परमेश्वरात् । अनेनाद्वैतं द्वैतं परमार्थत इति पदत्रयं विवृतम् ।

कुत इ[१]त्यन्यथाज्ञानं परमेश्वरादिति । यतः परमार्थस्यैव मायया इच्छया मात्रं निर्मितम् इदं तस्मात् तदिच्छयैव निवर्तते ।

## भाष्यार्थरत्नावलिः

प्रपंचोपशममित्यत्र देहादौ स्वीयताप्रत्ययकृतबंन्धनिवर्तकत्वमुक्तं । पूर्वमन्त्रेच देहादौ ममताबुद्धिलक्षणभ्रमपर्यावर्तनसमयानन्तरं तुरीयपदप्राप्तिरित्युक्तं । तदयुक्तं देहादिना स्वस्वामिसंबन्धस्यापरायत्ततया स्वाभाविकत्वेन तदनुसंधानस्य संसारहेतुत्वानुपपत्तेरित्याशंकायामुच्यते ।। **प्रपञ्चइति** ।। प्रपञ्चो यदिविद्यत इवप्रतीयते तथापि निवर्तिष्यते । इदं द्वैतं भेदादिकं जगत् मायामात्रमाविद्यकं परमार्थतोऽद्वैतं अभेद एवेत्यपव्याख्यां प्रमाणेन निराकुर्वन् व्याचष्टे ।। **तन्वेति** ।। अत्र प्रपञ्च इत्यनुवादेन तन्वा स्वस्वामिसंबन्ध इति व्याख्यानं पूर्वमन्त्राज्जीवपदं षष्ठ्यन्ततयानुवर्तत इति भावेनोक्तं ।। **अस्य शरीरिणः इति** ।। यदि विद्यत इत्यस्य स्वातन्त्र्येण विद्यत इत्यर्थमभिप्रेत्योक्तं ।। **वस्तुत इति** ।। कुतः स्वतो नेत्यतो यदि यस्मात् परमार्थतः परमार्थस्य वशे विद्यते इत्यर्थमाह ।। **यतइति** ।। यतः तन्वादिकः परमस्य वशेऽतोऽसौ तन्वा स्वस्वामिसंबन्धो जीवस्य वस्तुतः नैवास्तीति योजना । स्वस्वामिसंबन्धो जीवस्य परायत्तश्चेदस्ति स्वातन्त्र्येण तु नास्ति । "स्वस्वामिभावो ध्रुव एष यत्र तर्ह्यस्तु तेऽसौ"इति भागवते । "स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यता" इत्यादौच तथोक्तेरितिभावः । यदिशव्दस्यास्वातन्त्र्यार्थकत्वमत्र । तद्विवक्षाच "पुत्रा मे यदिविद्यन्ते मरिष्यन्त्येव ते ध्रुवं । यदिराज्यं करोत्येप नश्यत्येव नसंशयः । "इति धृतराष्ट्रवचनात्, प्रपञ्चोयदीत्यादि "यदिशव्दस्त्ववस्तुत्वे चास्वातन्त्र्येच कीर्त्यते । अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौच कीर्त्यते ।" इत्येकादशस्कन्ध तात्पर्ये प्रयोगाभिधानप्रदर्शनपूर्वमुक्तानुसन्धेया ।

ननु स्वस्वामिभावसंवन्धस्य प्रतीयमानत्वात् कथमभाव इत्यत आह ।। **तथापीति** ।। यद्यप्येप स्वतो नास्ति तथाप्येष तन्वा स्वस्वामिभावसंवन्धो जीवस्याभिमानात् प्रदृश्यत इत्यर्थः । एतेनोपनिपद्युत्तरमन्त्रात्

१ एत्यन्यथेति पाठेन भाव्यमिति भाति ।

केनचिदनुकृष्यते अभिमानादित्यर्थस्तथाच यद्यपि प्रपञ्चो जीवस्य यदि विद्यते परतन्त्र एव वर्तते । तथापि स्वातन्त्र्याभिमानात् विद्यते प्रतीयत इत्यर्थ उक्तोभवति। विदेर्ज्ञानार्थकत्वात्। ननु स्वस्वामिभावसंबन्धस्तावत् प्रतीयते। यत्प्रतीयते तत्सदित्युत्सर्गः । प्रामाण्यस्वतस्त्वांगीकारात् । नच बाधकं पश्याम इत्याशंका परिहाराय व्याचष्टे ।। **अतइति** ।। अतः प्रतीयमानत्वात् स्वस्वामिसंबन्धो जीवस्य स्वतो विद्यत इति यद्यपि भवदंगीकारो भवेत्तथापि वेदादिभिः भगवत्स्वातन्त्र्यानुसन्धानात् सभ्रमो अंगीकारोवा निवर्तेदेवेत्यर्थः। एतेन यदि यस्मात् प्रपञ्चस्तन्वा स्वस्वामिसंबन्धो विद्यते प्रतीयते । अतः स विद्यत इति । यद्यपि भगवदंगीकारो विद्यते तथापि सभ्रमोंऽगीकारोवा परमार्थात् । परब्रह्मणः तत्स्वातन्त्र्यानुसंन्धानात् । निवर्तेत । निवर्तेतैवेत्यर्थ उक्तो भवति ।

ननु भगवतः स्वातन्त्र्यमेव नास्ति । यदनुसन्धानाद्भ्रमो निवर्तेत । वेदपुराणादिष्वेव "जनितोत विष्णोः" इत्यादौ भगवत्पारतन्त्र्यस्य ब्रह्मादिस्वातन्त्र्यस्य चोक्तेरित्याशंकापरिहारपूर्वं शिवमद्वैतमित्युपनिषद्यद्वैतपदस्यानन्यथाज्ञातमन्यथाज्ञाननिवर्तकं चेत्यर्थद्वयं श्लोके उच्यते मायामात्रमित्युत्तरार्धेन । अत्र पूर्वमन्त्राज्जीवपदं विभक्तिवचनव्यत्ययेन जीवैरित्यनुवर्तते । ततश्च परमार्थतः परमेश्वरादद्वैतं अन्यथाज्ञातं यत्परब्रह्मादिवस्तु तदिदं जीवैरज्ञैरद्वैतमन्यथा ज्ञातमित्यन्वयमर्थं चाह ।। **अद्वैतमित्यादिना** ।। परमार्थतः परमेश्वरादित्येतदादौ योज्यं । नवेदादौ विष्णवस्वातन्त्र्यं शिवादिस्वातन्त्र्यं चोक्तं । किन्तु उपक्रमाद्यनुसंधानाकुशलैरिव परब्रह्मादिवस्तु जन्यादिमत्वेन वेदार्थतयाऽन्यथाज्ञातं अज्ञैर्हि तथाप्रतीतमिति श्रुतेः । उत एतत् कुशलेन परमेश्वरेण श्रीब्रह्मादिभिरज्ञैश्चानन्यथा ज्ञातत्वादिति भावः । यदि तदन्यथाज्ञानं तथैवावतिष्ठते तर्हि मोक्षायोग इत्याशंक्य सयुक्तिकं तत्परिहारकत्वेन "निवर्तेत नसंशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः"इति पदसप्तकं व्याचष्टे ।। **तस्यैवेति** ।। परमार्थत इति पष्ठ्यन्तात्तसिरिति भावेन मायामात्रमित्यस्य तेनान्वय उक्तस्तस्यैव मायामात्रमिति । पदद्वयार्थ उक्तस्तदिच्छानिर्मितमिति । इदं प्राकृतं परब्रह्मादि-

विषयकं । द्वैतमित्यस्यार्थस्तदन्यथाज्ञातमिति । अन्यथाज्ञानस्य भगवदिच्छानिर्मितत्वं तदिच्छानिवृत्तौ हेतुरितिभावेनोक्तं ।। **तस्मादिति** ।। परामार्थतइत्यस्य निवर्तेतेत्यप्यन्वयं मत्वार्थमाह ।। **तदिच्छयैव निवर्तत इति** ।। ततश्चायं मन्त्रशेषार्थः यदि यस्मात् परमार्थतः परार्थस्य ब्रह्मण एव मायामात्रमिच्छानिर्मितमिदं प्रकृतं परब्रह्मादिविषयं द्वैतमन्यथाज्ञानं नान्यहेतुकं तस्मात्परमार्थतः परमार्थेन तदिच्छयैव निवर्तत इति । स्ववचनेन व्याख्यातमर्थं प्रमाणेन दृढयति ।। **परेणेति** ।। द्विधा वस्तुस्वभावापेक्षयाऽन्यथा न ज्ञातं किंत्वंजसा ज्ञातमिति योज्यं । "परमार्थात् पराद्विष्णो"रितिपञ्चमी षष्ठ्यर्थः । मायामात्रमित्यस्य इच्छया (इति) व्याख्यानं । इच्छावशादनु ।। **ज्ञातमिति** ।। पदार्थकथनपूर्वं व्याख्यानं ।। **मायेतीति** ।। परमार्थतइत्यत्र पारमार्थिकसत्यत्वाद्विष्णुः परमार्थ इति प्रतीतिं वारयितुं "परमार्थात्पराद्विष्णोः"इत्यस्य विवरणं उत्तमत्वादिति। "निवर्तेत नसंशयः। मायामात्रं" इत्यादौ मायामात्रद्वैताद्वैतपरमार्थपदानामेव विप्रतिपन्नार्थत्वात्तेषामेवार्थकथनं । नावशिष्टस्येति बोध्यं । अद्वैतमन्यथाज्ञातं, द्वैतं द्विधा ज्ञातं अन्यथाज्ञातमितिव्याख्यातं । तद्व्युत्पाद्यं दर्शयति ।। **अनन्यथेति** ।। द्विधा इतमित्यनुवर्तते । तात्पर्यमाह ।। **अन्यथा ज्ञातमिति** ।। द्विधा इतं ज्ञातं। द्वीतमेव द्वैतं तथा नभवतीत्यद्वैतमित्यर्थः ।

ननु द्वैतस्याग्रहणं तुल्यमिति तुरीयस्य मिथ्यामत्यजनकत्वमुक्तमिह परमार्थात्पराद्विष्णोर्जातमिच्छावशात् तदिच्छयैव निवर्तते इत्युच्यते निवर्तकस्वरूपं तदिच्छयैव जनिरित्यङ्गीकारे विरोध इति चेन्न । तत्र जाग्रदाद्यप्रवर्तकत्वान्मन आदिषु स्थित्वा तत्परिणामपूर्वं मिथ्यामत्यजनकत्वमुक्तं इहतु ईश्वरत्वादिच्छामात्रेण तत्सृष्टृत्वमुच्यत इति कुतो विरोधः ।

## पदार्थदीपिका

ननु अहं ममेत्यादिस्वस्वामिभावसंबंधरूपः प्रपंचः यदिजीवस्वभावः स्यात्तदा भगवत्प्रसादादपि कथमसौ निवर्तेतेत्याशंकायां स न जीवस्वभावः किंत्वाभिमानिको भगवदिच्छाधीन एवातस्तस्य तज्ज्ञानजनितात्तत्प्रसादान्निवृत्त्युपपत्तिरित्याशयेन प्रवृत्ते प्रपंचइति श्लोके आद्यमर्धमन्यथाप्रतीतिनिरासाय

व्याचष्टे ।। **तन्वेत्यादिना** ।। प्रपंच इत्यनूद्य तन्वेत्यादिं व्याख्यातं । शरीरिणोऽस्य जीवस्य । तन्वा देहेन । निरूपितो यः स्वस्वामिभावसंबंधोऽसौ वस्तुतो जीवस्वभावतो नैवास्ति । जीवस्य स्वाभाविको नभवतीत्यर्थः । कुत इत्यत आह ।। **परमस्येति** ।। तर्ह्यहमेतत्स्वामीदं चदेहादिकं मदीयमिति प्रतीतिः कथमित्यत आह ।। **तथापीति** ।। यद्यपि जीवस्यावास्तवो भगवदधीनश्च तथापीत्यर्थः । एषः स्वस्वामिभावसंबंधः । अभिमानात् स्वस्मिन्स्वातंत्र्यारोपादित्यर्थः । अज्ञानादित्यर्थ इत्यप्याहुः । अतः स्वस्वातंत्र्यारोपेण परिदृश्यमानत्वादित्यर्थः । अज्ञानेन दर्शनादित्यर्थ इत्यप्याहुः । स्वस्वामिभावसंबंधाख्यः प्रपंचो विद्यतेऽस्वाभाविकतया अभगवद्वशतया चास्तीत्यंगीकारो यदिभवेदित्यर्थः। निवर्तेतेत्यत्र कस्मादिति नज्ञायतेऽतो भगवज्ज्ञानादिति पूरितं। "चंद्रादयस्तु मन्यंते सर्वस्मादुभयंपदमि"ति वचनान्निवर्तेतेतियुक्तमिति ज्ञातव्यं ।

भगवज्ज्ञानादपि कथं तन्निवृत्तिरित्यतो भगवदिच्छाधीनत्वात्तस्य तदिच्छयैव निवृत्तिर्युक्तेत्याशये प्रवृत्तं मायामात्रामित्यर्धं स्ववाक्येन व्याचष्टे ।। **अद्वैतमित्यादिना** ।। महद्भिरिति शेषः । अन्यथा वस्तुस्वरूपापेक्षया द्वितीयेन प्रकारेण महद्भिर्न ज्ञातं यत्परब्रह्मादिवस्तु तदद्वैतमित्यर्थः । अद्वैतं द्वैतमित्यन्वयमभिप्रेत्य द्वैतमित्यस्यार्थमाह।। **तदिति** ।। अद्वैतशब्दोक्तं परब्रह्मादिवस्त्वित्यर्थः । यस्मादिति शेषः। द्विधा वस्तुतत्वापेक्षया । अज्ञैःअसज्जनैः ।। **अन्यथाज्ञातमिति** ।। भगवन्निष्ठस्वामित्वस्य स्वस्मिन्नेव ज्ञानेन भगवत्यज्ञानादन्यथाऽस्वामित्वेन ज्ञातमित्यर्थः ।। तेषां अन्यथाज्ञाने निमित्तं वक्तुं प्रवृत्तं परमार्थतो मायामात्रमिति । तत्र परमार्थत इति यथास्थितपदार्थं तावदाह।। **परमेश्वरादिति** ।। परमार्थतो मायामात्रमित्यन्वयमंगीकृत्य तसेः सार्वविभक्तिकत्वात्षष्ठ्यर्थे तसिरिति भावेन व्याचष्टे ।। **तस्यैवेत्यादिना** ।। तस्मादिति श्रुतौ शेषोक्तिः । तथाच यन्महद्भिरनन्यथाज्ञातत्वादद्वैतं ब्रह्म तत्द्वैतं अज्ञैरन्यथाज्ञातं तच्चान्यथाज्ञानं परमार्थतः परमेश्वरस्य मायामात्रं इच्छानिर्मितं यस्मात्तस्मात्तदिच्छयैव निवर्तत इत्यर्थः । मायामात्रमित्यादिवाक्यं स्ववाक्येन व्याख्यातं तत्र प्रमाणं च आह

।। **परेणेति** ।। महद्भिरिति शेषः। यस्मात्कारणात् यत्प्रसिद्धं भगवत्स्वरूपं परेण ब्रह्मणा प्रसन्नेन तत्प्रसादादितियावत् । द्विधा वस्तुतत्त्वापेक्षया अन्यथा महद्भिर्नज्ञातं प्रत्युतांजसैव ज्ञातं । तस्मात्परं ब्रह्माद्वैतमुच्यते। तदेव जीवेनाज्ञेनासज्जनेनान्यथाज्ञातं द्वैतमुद्दिष्टं । तन्मिथ्याज्ञानं परमार्थात् पंचमी षष्ठ्यर्थे परमार्थस्य विष्णोरिच्छावशादन्वेवजातं अतस्तदिच्छयैव निवर्तत इति शेषः । मायामात्रमित्येतदनिर्वचनीयाविद्यानिर्मितमित्यन्यथाप्रतीतिनिरासाय तदिच्छानिर्मितमिति प्राग्व्याख्यातं । तत्र प्रमाणमाह **मायेतीति** परमार्थत इत्येतत्परमेश्वरादिति प्राग्व्याख्यातं । तत्र परमेश्वरस्य परमार्थशब्दवाच्यत्वं कुत इत्यत आह ।। **उत्तमत्वादिति** ।। अद्वैतमनन्यथाज्ञातमिति प्राग्व्याख्यातं। तत्कथमद्वैतशब्दाल्लभ्यत इत्यत आह ।। **अनन्यथेति** ।। अन्यथा वस्तुतत्वापेक्षया प्रकारांतरेणेति द्वीत्यस्यार्थः। तमित्यनूद्यावगतमिति व्याख्यातं । अन्यथेतं न भवतीत्यनन्यथेतं तदेवचाद्वैतशब्दवाच्यमित्यर्थः । द्वैतं द्विधाज्ञातमिति प्राग्व्याख्यातं तत्कथं द्वैतशब्दाल्लभ्यत इत्यत आह ।। **द्वैतमिति** ।। द्वीत्यस्यार्थो द्विधेति । वस्तुतत्त्वपेक्षया द्विधा प्रकारांतरं ह्यन्यथेत्युच्यते । अन्यथेत्येतदावर्तनीयं । तथाचान्यथा प्रकारांतरेण ज्ञातं यत् तत् द्वैतमुच्यते इत्यर्थ इति योज्यं । यद्वा द्विधाहीत्यनंतरं ज्ञातमिति शेषः । वस्तुस्वरूपापेक्षया द्विधा हि ज्ञातं द्वैतं तात्पर्यार्थमाह ।। **अन्यथाज्ञातमित्यर्थ इति** ।। इति वाक्यभेदेन व्याख्येयं ।

## उपनिषत्

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ।।**

**।। इति द्वितीयः खण्डः ।।**

## भाष्यम्

**अतो विकल्पः शरीरादिसम्वन्धः केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते । अयं सतां वादः - ज्ञाते सति परब्रह्मणि द्वैतमन्यथाज्ञानं निवर्तत इति ।**

'विकल्पो देहबन्धादिः केनचित् कारणेन तु ।
कल्पितो विनिवर्तेत गुरुवाक्यादसंशयः ।।
एष एव सतां वादो ज्ञाते ब्रह्मणि तत्त्वतः ।
निवर्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ ।।' इति च ।

।। इति द्वितीयः खंडः ।।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - पूर्ववाक्यार्थमेव विशदयन्नाह ।। **विकल्प इति** ।। भगवदिच्छाधीनत्वेनास्वाभाविकत्वादहंममेत्यादि स्वस्वमिभावसंबंधरूपो विकल्पो यदि केनचित् स्वभाविक इति कल्पितस्तर्ह्यसावुपदेशान्निवर्तेत । भगवानाचार्य एव वाक्यद्वयं प्रमाणस्ववचनाभ्यां सम्यग्व्याकरिष्यति ।

**इति श्रीमांडूकटीकायां व्यासतीर्थमुनिविरचितायां**
**खंडार्थे द्वितीयः खंडः**

**भाष्यार्थः** - विकल्पइति वाक्यं पूर्ववाक्यानतिभिन्नार्थत्वेन वैयर्थ्यत्वेन वैयर्थ्यमुपसंहारार्थतया परिहरन् व्याचष्टे ।। **अतइति** ।। जीवानां देहादौ स्वातंत्र्येण स्वस्वामिभावस्यातात्त्विकत्वादित्यर्थः । कः सतां विदुषां वाद इत्यत आह ।। **ज्ञाते सतीति** ।। तद्वाक्यं प्रमाणेन स्पष्टं व्याचष्टे ।। **विकल्पइति** ।।

**।। भाष्यार्थे द्वितीयः खंडः ।।**

## प्रकाशिका

श्रुतिरपि स्वोक्तपूर्वार्थमेव विशदयन्ती कदा निवर्तत इत्यस्यापि स्पष्टमुत्तरमाह ।। **विकल्प इति** ।। अस्माभिस्तु श्रुतेस्तात्पर्यपर्यवसितमर्थमादाय मन्दानामप्युपकाराय प्रागेकवाक्यतया योजना कृता । विकल्पः विरुद्धः कल्पः कल्पनारूपो देहादावहंममतारूपः सम्वन्धः यदि केनचिदज्ञानादिना कल्पितो निष्पादितः तर्हि उपदेशाद् गुरूपदेशानन्तरं निवर्तेत । तत्कोऽसौ गुरूपदेश इत्यत आह ।। **अयं वाद इति** ।। ब्रह्मणि ज्ञाते सति श्रवणादिना परोक्षीकृते सति द्वैतं ब्रह्मविषयकमन्यथाज्ञानं न विद्यते । वस्तुनि

पुनर्भ्रमायोगात् । याथातथ्येन स्वमाहात्म्यद्रष्टरि पुरुषे ब्रह्मणः कृपावश्यंभावात् । ज्ञाते ब्रह्मण्यपरोक्षीकृते सति देहादिविषयेऽपि स्वीयत्वभ्रमो विनिवर्तेत । अयं सतां वादः गुरूणामुपदेशः । एतादृशगुरूपदेशात् स्वभ्रमनिवर्तकब्रह्मापरोक्षज्ञानाय गुरूपदेशादेव श्रवणादिकं कुर्वतो भगवदपरोक्षज्ञाने सति तदिच्छया देहादौ या स्वातन्त्र्यभ्रमनिवृत्तिः सा सर्वस्याप्यदिकारणत्वाद् गुरूपदेशादेव भवतीति भावः । एतद्वाक्यार्थमपि सप्रमाणकमाह ।। **अनन्यथा इतमित्यादिना** ।।

**।। इति द्वितीयः खण्डः ।।**

## भाष्यविवृतिः

एवं तन्वा स्वस्वामिभावसंबन्धप्रत्ययलक्षणविकल्पस्य परमेश्वरेच्छाधीनत्वं तन्निवृत्तेरपि तदिच्छाधीनत्वमिति द्वे अभ्यधायिषाताम् । तत्र पूवार्धेन (विकल्पस्य) अज्ञानान्यथाज्ञानलक्षणावान्तरकारणं स्पष्टं निरूप्योत्तरार्धेन तन्निवृत्तावन्यथाज्ञानादिनिवृत्तिलक्षणमवान्तरकारणं च निरूपयति ।। **विकल्पइति** ।। विकल्पः शरीरादिसम्बन्धः ।। केनचिदज्ञानेनान्यथाज्ञानेन च कल्पितोऽपि, यदिशब्दो अप्यर्थः उपदेशान्निवर्तते । अत्र पूर्वार्धस्य विकल्पनिवृत्यभिधाने न तात्पर्यं किन्तु विकल्पावान्तरकारणाभिधान एव तात्पर्यम् ।

यद्यपि निवर्तेत इति पदं पूर्वार्धगतं तथापि पुरुषानुमन्त्रमन्त्रणवत् कार्यकालपरिभापावच्चोत्तरत्रान्वयात् तद्विशिष्टवाक्यार्थैकवाक्यत्वाच्च न पूर्वार्धस्यावान्तरकारणप्रतिपादनतात्पर्यकत्वे विरोधः । अथवा निवृत्तौ उपदेशलक्षणकारणाभिधाने विकल्पे चाज्ञानादिलक्षणकारणाभिधाने चेत्युभयत्र तात्पर्यमस्तु वाक्यभेदेन । अनुवादकता यद्यपि दृश्यते अस्य वाक्यस्य तथापि विनाशमव्ययस्यास्येत्यत्रानुवाद्यतया भासमानस्याप्यव्ययत्वविधानतात्पर्यकत्ववदशोच्यानन्वशोचस्त्वमित्यादौ अशोच्यत्वविधानतात्पर्यकत्ववच्च प्रकृतेऽपि कारणाभिधानतात्पर्यकत्वमप्यविरुद्धम् । अयं च विकल्पः उपदेशाद् गुरुवाक्याद् भगवद्विषयान्यथाज्ञाननिवृत्तौ निवर्तते ।

नात्र द्वैतपदेन स्वस्वामिभावसम्बन्धप्रत्ययलक्षणभ्रमोऽत्र[1] विवक्षितः । ब्रह्मणि ज्ञाते द्वैतं निवर्तत इत्युक्त्या ब्रह्मगतान्यथाकारप्रतिभासनिवृत्तेरस्वरसतो भासमानत्वात् ज्ञाते द्वैतं भगवद्विषयमन्यथाज्ञानं निवर्तत इति वादः सताम् । तथा च विकल्पनिवृत्तौ अन्यथाज्ञाननिवृत्तिः कारणमिति गम्यते। तथोपदेशाद् ब्रह्मणि । ततश्चास्य वाक्यस्य निवृत्तिकारणविधाने सद्वादत्वविधानेच तात्पर्यमित्यवगम्यते । एवमज्ञानान्यथाज्ञाननिवृत्तौ विपर्यासनिवृत्या तुरीयप्राप्त्या ज्ञान्यानन्दमेति तदिदमभ्यधाद्भाष्यकारः ।। **विष्णुस्तुरीयरूपेणेत्यादिना आनन्दमेत्यसावित्यन्तेन** ।।

**।। इति प्रथमोऽध्यायः ।।**

## भाष्यार्थरत्नावलिः

विकल्प इति मंत्रः पूर्वमंत्रादनतिभिन्नार्थः । पूर्वमपि प्रपंचो देहेन विश्वादिसंबंधः भगवत्स्वातंत्र्याज्ञानादभिमानाच्च प्रतीयते । तथापि भगवज्ज्ञानान्निवर्तेत बाध्येतैवेत्युक्तत्वादित्यत उपसंहारत्वात् न पौनरुक्तमित्यवतारयन्व्याचष्टे ।। **अतो विकल्प इति** ।। अद्वैतमन्यथाज्ञानमित्याद्युक्तरीत्या भगवत्स्वातंत्र्यजीवास्वातंत्र्ययोरबाधितेश्वरज्ञानसिद्धत्वाज्जैरेव अन्यथाज्ञाततया जीवानां देहादौ स्वस्वामिभावस्याताात्त्विकत्वाद्युक्तं स्वस्वामिभावस्यारोपितत्वं । ब्रह्मज्ञानेन तन्निवृत्तिश्चेत्युपसंहरति विकल्प इत्युत्तरमंत्रेण इत्यर्थः । अत्र विकल्पो भेदः यद्यपि केनचिदेकेन जीवेनाविद्यया कल्पितस्तथापि नेह नानास्ति किञ्चनेत्युपदेशादागमान्निवर्तते । ज्ञाते अधिष्टाने सम्यज्ज्ञाते तत्रारोपितं द्वैतं नविद्यत इति । सत्यं वाद इत्यन्यथाप्रतीतेर्व्याचष्टे । शरीरादिनासंबंधः । स्वस्वामिभावरूपः । अज्ञानं भगवत्स्वातंत्र्याननुसंधानं । आदिपदेन स्वस्य स्वातंत्र्यज्ञानं । कल्पित आरोपितः । अपीत्यस्य यद्यपि तथापीत्यर्थः । यद्यपीत्येतदादौ योज्यं । उपदेशाद्गुरूपदेशात् । नविद्यत इत्यतःपरं इतिशब्दमध्याहृत्ययोजयति अयमिति । इत्ययं सतां वाद इत्यन्वयः । उक्तार्थे समाख्यां पठति ।। **विकल्प इति** ।। आदिपदेन इंद्रियादिभिः स्वस्वामिसंबंधो गृह्यते । मूले भगवत्स्वा-

---

१. इदं पदं अधिकमिति भाति । यतः प्रथममेव "नात्र" इति विद्यते ।

तंत्र्यानुसंधानादारोपनिवृत्तिरित्युक्तं । तदनुसंधायकेषु वेदेषु स्वातंत्र्यमिवा-स्वातंत्र्यस्यापि कथनेन संशयस्यैवोपपत्तेः । तच्च ब्रह्मादिभिः स्वतंत्रत्वेनैव ज्ञायत इत्युक्तमिति वाच्यं । अस्माकं तज्ज्ञानोपायाभावादित्याशङ्कायामु-पदेशादित्युक्तं । तस्यार्थो गुरुवाक्यादिति । वेदार्थनिर्णायकाद् गुरुवाक्यादसंशयं संशयं विना निवर्ततेत्यर्थः । गुरूवाक्याज्ज्ञाते ब्रह्मणी-त्यप्यन्वयः । मंत्रार्थस्तु स्पुटः ।

ननु विद्येत निवर्ततेत्यनयोः विद्यते निवर्तत इति वस्तुस्थितिकथनपरत्वेन व्याख्यानं विष्णुतत्वनिर्णयादिविरुद्धं । वस्तुस्थितिं व्याचक्षतः लिङ्गनिर्देश-वैयर्थ्यस्योक्तत्वात् ।। मन्मतेपि तद्दूषणसाम्यादिति चेन्न । मन्मते यथा लिङ्गेन वैयर्थ्यं तथार्थं तत्वनिर्णयादौ उक्त्वा प्रमाणानुसारेण लिङ्गव्यत्यय-मङ्गीकृत्येह व्याख्याने दोषाभावात् । वाक्यार्थज्ञानदरिद्रैः लिङ्नादरेण एकस्यैवार्थस्याप्रामाणिकस्योक्तत्वात्तद्दूषणोपपत्तेरिति ज्ञेयम् ।।

।। इति द्वितीयखण्डः ।।

## पदार्थदीपिका

विकल्पो विनिवर्ततेति वाक्यं पूर्ववाक्यादनतिभिन्नार्थत्वात्पुनरुक्तमि-त्याशंक्योपसंहारार्थत्वान्न पुरुक्तमित्यभिप्रेत्यात इत्यध्याहारेण व्याचष्टे ।। **अत इति** ।। शरीरादिसंबंधः तन्निरूपितः स्वस्वामिभावसंबंधः अपिशब्देन "यदि शब्दस्त्ववस्तुत्वे ह्यस्वातंत्र्येच भण्यत" इत्येकादशस्कंधता-त्पर्योक्तस्यावस्तुत्वरूपार्थस्य यदिशब्दव्याख्यानस्य संग्रहः । तथाच कल्पितत्वादेव यदि अवस्त्वित्यर्थः । अस्वाभविक इति यावत् । उपदेशाद् भगवदुपदेशरूपाद् गुरुवाक्यादपरोक्षज्ञानद्वारा निवर्तत इत्यर्थः । निवर्तत इत्यनंतरमानंदाविर्भवरूपां मुक्तिं चैतीति सिद्धमिति वाक्यशेषो द्रष्टव्यः ।

नन्वयमुपसंहारोनुपपन्नः । अज्ञानाकल्पितस्य विकल्पस्य भगवज्ज्ञाना-न्निवृत्त्यनंतरमानंदाविर्भावरूपां मुक्तिमेतीत्यस्यार्थस्याप्रामाणिकत्वादित्याशंका परिहाराय प्रवृत्तमयंवाद इत्यादिवाक्यं व्याचष्टें ।। **अयमिति** ।। इत्ययं सतां वाद इत्यन्वयः ।। व्याख्यातार्थे प्रमाणंचाह ।। **विकल्प इति** ।।

देहादिनिरूपितः स्वस्वामिभावसंबंधो देहसंबंधः । केनचित्कारणेन अज्ञानादिना । गुरुवाक्यात् भगवदुपदेशात् । तत आनंदमेत्यसाविति श्रुतौ शेपोक्तिरित्यवगंतव्यं । अत्र लिङादीनां वस्तुस्थितिकथनपरत्वमेवाभिप्रेतं नप्रसंगार्थत्वमित्यवगंतव्यं । ननु तत्वनिर्णयादौ प्रसंगार्थतया श्लोकद्वयं स्वयमेव व्याख्याय वस्तुस्थितिकथनपरतया परकृतव्याख्याने लिङादीनां वैयर्थ्यमभिधायात्रपुनर्वस्तुस्थितिकथनपरतया व्याख्याने कथं न स्ववचन विरोध इति चेदयमभिप्रायो भाष्यकारस्य । सर्वथा तर्कपरमेवेदं श्लोकद्वयं नवस्तुस्थितिकथनपरं । वस्तुस्थितिकथनपरत्वश्रद्धायामपि न त्वदुक्तरीत्या वस्तुस्थितिकथनपरं अप्रामाणिकत्वात्किंतु अस्मदुक्तरीत्यैव प्रामाणिकत्वादिति ।

**।। इति मांडूकभाष्यार्थे द्वितीयः खण्डः ।।**

**ततश्चायं खंडार्थः** - एवं विश्वादीनां त्रयाणां महिमानं निरूप्य तुरीयस्य तन्निरूपयति ।। **नांतःप्रज्ञमित्यादिना** ।। विशवादिवत्तुरीयस्य स्थानानुक्तेर्नासिकामूलमारभ्य द्वादशांगुलांते मस्तकमध्ये तिष्ठतीतिस्थानं द्रष्टव्यं । मस्तकमारभ्योपरि द्वादशांगुलिपरिमिताकाशप्रदेशे तिष्ठतीति तुरीयस्य स्थानं द्रष्टव्यमित्यप्याहुः । नांतःप्रज्ञं देहांतस्थिता ये स्वाप्नपदार्थाः । तान् न प्रज्ञापयतीति नांतःप्रज्ञः तं । स्वप्नावस्थाया अकर्तारमित्यर्थः । नबहिःप्रज्ञं बहिस्थिता ये पदार्था जाग्रत्कालीनाः तान् नप्रज्ञापयतीति नबहिःप्रज्ञः तं। जाग्रदवस्थाया अकर्तारमित्यर्थः। नोभयतःप्रज्ञं बहिःशब्दादिकं जानाति अन्तः स्वप्नंच पश्यति कस्यांचिदवस्थायां तामुभयज्ञानशब्दवाच्यावस्थां च न प्रज्ञापयतीति नोभयतःप्रज्ञः तं । एतदवस्थाप्रवर्तकौ च विश्वतैजसाविति-संप्रदायविदः । नप्रज्ञानघनं घनस्याज्ञानावृतस्य जीवस्य सुप्त्यवस्थाकाल सुखानांच प्रज्ञापनं यस्मान्न भवत्यसौ नप्रज्ञानघनः तं । सुप्त्यवस्थायाः अकर्तारमित्यर्थः । नप्रज्ञं प्रज्ञाशब्दोक्तासंप्रज्ञातसमाध्यवस्था ज्ञानं यस्मान्न-भवत्यसौ नप्रज्ञः तं । असंप्रज्ञातसमाध्यवस्थाया अकर्तारमित्यर्थः । नाप्रज्ञं चरमदेहमुत्सृज्य मुक्तिं गच्छतां ज्ञानाप्रदो न भवतीति नाप्रज्ञः तं । अदृष्टं मुख्यप्राणानुग्रहाभावेनामुक्तो यस्तेनादृश्यमानत्वाददृष्टः तं । अव्यवहार्यं

मुक्तिं विना संसारे ग्रहणापरपर्यायव्यवहाराद्यविषयत्वादव्यवहार्यः तं अग्राह्यमित्यर्थः । अलक्षणं विश्वादित्रयवत् जाग्रदाद्यवस्थाप्रवर्तकत्वरूपानुमापक धर्मशून्यत्वादलक्षणः तं । अचिंत्यं अनुमापकधर्मशून्यत्वादेवानुमितिरूप चिंताविषयो न भवतीत्यचिंत्यः तं । अव्यपदेश्यं व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादचिंत्यत्वादेव व्यपदेष्टुमशक्यत्वादव्यपदेश्यः तं । ऐकात्म्यप्रत्ययसारं प्रधानत्वादेकः पूर्णत्वादात्मा । प्रधानं पूर्णं यस्मात् भगवत्स्वरूपं तस्मादेवैकात्म्यं । ज्ञानरूपत्वात्प्रत्ययः आनंदरूपत्वात्सारः ऐकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति तथोक्तः तं । प्रपंचोपशमं गुणादिभिर्विस्तृतत्वात्प्रपंचः उशब्द(उच्छब्द)वदुपशब्दोप्युत्कृष्टवाची । शमशब्दश्चानंदरूपत्ववाची। तथाचोत्कृष्टानंदरूपत्वदुपशमः प्रपंचश्चोपशमश्च प्रपंचोपशमः तं । यद्वा प्रपञ्चस्य देहसंबंधरूपस्य उपशमो नाशो यस्माद्भवत्यसौ प्रपंचोपशमः तं । शिवं निर्दुःखसुखरूपत्वात् शिवः तं । अद्वैतं वस्तुस्वरूपापेक्षयाऽन्यथाप्रत्ययो द्वैतं तच्छमयतीत्यद्वैतः तं । अन्यथा प्रत्ययाकारणमित्यर्थः । इदं च विशेषणं प्राज्ञेपिद्रष्टव्यं । तादृशं तुरीयं ज्ञानिनश्चतुर्थं मन्यंते । सोऽयमात्मा चतुष्पादित्युक्तमुपसंहरति ।। **स इति** ।। स विश्वादिरूपेण चतुष्पादात्मा आदानादिकर्ता स एव सर्वैर्मुमुक्षुभिर्विशेषेण ज्ञेय इत्यर्थः ।। १ ।।

अस्मिन्नप्यर्थे सलिलेश्वरो ब्रह्मदृष्टान्मंत्रान्संवादयन्नाह ।। **अत्रैत इति** ।। प्रपंचोपशममिति तुरीयस्य सर्वानिष्टनिवृत्तिकारणत्वमुक्तं। तत्र तावन्मंत्रं पठति ।। **निवृत्तेरिति** ।। अव्ययस्तुरीयः सर्वदुःखानां निवृत्तेः प्रभुः समर्थः कारणभूतः मोक्षदत्वात् । ईशानां मुक्तानामनश्चेष्टक ईशानः । अद्वैतमित्युक्तार्थे मंत्रं पठति । **अद्वैत इति** ।। विभुस्तुरीयः । सर्वभावानां भवंति देहयोगेनोत्पद्यंत इति भावा जीवाः तेषां कर्तरिषष्ठी । तैः मुक्तिं गमिष्यद्भिर्देवो गम्यःस्मृतः । मंत्रेऽधिकमेतत् ।। २ ।।

नांतःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनमिति तुरीयस्य यद्विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तं तत्र मंत्रं पठति ।। **कार्येति** ।। अत्र विश्वादीनां बद्धत्वोक्तिरन्यगतबंधस्य तदधीनत्वात्तदधीनत्वादर्थवदिति न्यायेनवा बंधय

तीति बद्ध इति कर्तृव्युत्पत्त्या वेति ज्ञातव्यं । नतु बद्धत्वं । सर्वमानविरुद्धत्वात् । कार्यं भ्रमः कारणमविद्या विश्वतैजसौ कार्यकारणरूपद्विविधबंधवंतौ प्राज्ञःकारणरूपैकबंधवान् कार्यकारणाकारेण द्वावपि बंधौ तुरीये नस्त इत्यर्थः । ननु विश्वतैजसयोर्द्विविधबंधवत्त्वेन प्राज्ञतुरीयाभ्यां भेदेपि परस्परं व्यावर्तक धर्माभावेन कथं भेद इति चेत् उच्यते । अविद्यारूपकारणबद्धत्वस्योभयत्राविशिष्टत्वेपि कार्यबद्धत्वे वैलक्षण्यसद्भावात् । तथाहि । अविद्या तत्कार्यस्वातंत्र्यादिविषयकजाग्रत्कालीनभ्रमरूपोभयबंधप्रदो विश्वः । अविद्यातत्कार्यजाग्रत्कालीनभ्रमकार्यस्वाप्नभ्रमरूपोभयवंधप्रदस्तैजसः । नच स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वं कथमिति शंक्यं । "अदृष्टे चाश्रुतेभावे न भावउपजायत"इति वचनेन संस्कारद्वारा तत्कारणकत्वस्य सत्त्वात् । मूलाविद्यारूपकारणमात्रबंधप्रदः प्राज्ञ इति तत्वप्रकाशिकाभावबेधयोरुक्तरीत्यावगंतव्यं। द्वौतु तुर्ये नसिध्यत इत्यनेन तुरीयस्य सर्वथाऽबंधकत्वमुक्तम्। तेनार्थात्सर्वज्ञानप्रदत्वं तस्येति सूचितं भवति । तथाच नाप्रज्ञमित्युक्तार्थेप्ययंमंत्रः प्रमाणमिति ज्ञातव्यं ।। ३ ।।

नप्रज्ञानघनमित्युक्ते प्राज्ञाद्वैधर्म्ये मंत्रांतरं पठति ।। **नेति** ।। प्राज्ञः आत्मानं स्वस्वरूपं परान् जीवाज्ञानसुप्त्यवस्थाकालसुखेभ्योऽन्यान्पदार्थान् सत्यानृतशव्दलक्षितं तत्कार्यं पुण्यं पापंच नसंवेत्ति । णिजंतमेतत् नसंवेदयतीत्यर्थः । इतरेषामसंवेदनरूपक्रियाप्रदाने प्राज्ञस्यैव स्वतंत्रत्वात् । नसंवेत्तीति श्रुतौ उक्तं स्वतंत्रे कर्तृशव्दःस्यात् इति वचनादित्यवगंतव्यं ।। **तुर्यमिति** ।। सर्वदृगित्येतदपि णिजंतं । तथाच तुरीयं रूपं आत्मानं परान् ज्ञानोत्तरकृतपुण्यं चैतत्सर्वं मुक्तौ दर्शयतीति सर्वदृगित्यर्थः । अनेन नाप्रज्ञमित्युक्तं सर्वज्ञानप्रदत्वं च प्रमापितं भवतीति ज्ञातव्यं ।। ४ ।।

शिवमद्वैतमिति तुरीयस्योक्तमद्वैतमिति विशेषणं सुषुप्तस्थान इत्यादौ प्राज्ञस्वरूपकथनपरे वाक्ये प्राज्ञस्याप्यभिप्रेतं । अतः प्राज्ञतुरीययोरद्वैतत्वं समानमित्यत्र मंत्रं पठति ।। **द्वैतस्येति** ।। प्राज्ञतुरीययोरुभयोर्देहादिविषयस्वातंत्र्यभ्रमरूपद्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः । प्राज्ञं तुरीयं च प्राप्तानां देहादिविषयस्वातंत्र्यभ्रमो न भवतीति तदकारणत्वमुभयोरपीति भावः ।

नात्मानमित्यादिना प्राज्ञतुरीययोर्वैधर्म्यमुक्त्वा द्वैतस्येति साम्यं चोक्त्वा पुनर्वैधर्म्यं प्रकारांतरेणाह ।। **बीजेति** ।। मूलाविद्यायुतः प्राज्ञः तस्याः तदधीनत्वेन प्राज्ञस्य तत्प्रवर्तकत्त्वात्तद्युक्तत्वं युक्तं । भृत्ययुतः स्वामीत्यादाविवेति द्रष्टव्यं । साच मूलाविद्या तुरीये न विद्यते । तत्प्रवर्तको नभवतीत्यर्थः ।। ५ ।।

विश्वतैजसयोर्द्विविधबंधवत्वेन साम्यं प्राज्ञस्यैकबंधवत्वेन ताभ्यां वैलक्षण्यं सर्वथा बंधशून्यत्वेन तुरीयस्य त्रिभ्यो वैधर्म्यं कार्यकारणबद्धावित्यनेनोक्तं तत्रैव मंत्रांतरं पठति ।। **स्वप्नेति** ।। स्वप्नः कार्यरूपो भ्रमः । निद्रा अविद्या । आद्यौ विश्वतैजसौ स्वप्ननिद्रायुतौ। उक्तरीत्या कार्यकारणबद्धावित्यर्थः । प्राज्ञस्त्वस्वप्ननिद्रया स्वप्नशब्दोक्तकार्यभ्रमं विना निद्रया अविद्यया युतः । कारणमात्रबद्ध इत्यर्थः । निश्चिताः यथार्थनिश्चयवंतः । तुरीये निद्रां स्वप्नंच नैव पश्यन्ति सर्वथा कार्यकारणबंधशून्यत्वेनैव तं पश्यंतीत्यर्थः ।। ६ ।।

नन्वेतादृशस्य तुरीयस्य प्राप्तिः कदेत्याशंकापरिहाराय आह ।। **अन्यथेति** ।। तत्त्वं स्वतंत्रतत्त्वं भगवंतं अजानतः पुंसो या निद्राऽविद्याऽस्ति । तयाऽन्यथागृह्णतोहं ममेत्यादि जाग्रत्कालीनस्वातन्त्र्यभ्रमयुक्तस्य स्वप्नः स्वप्नदर्शित्वभ्रमो भवति । जाग्रदवस्थायां स्वातन्त्र्यादिविषयभ्रमजन्यसंस्कारेण जाग्रत्कालीनमिदमिति स्वप्नरूपो भ्रमो भवति । एवंरूपे तयोर्विपर्यासे जाग्रत्स्वप्नभ्रमयोर्विपरिवर्तने क्षीणे सति पद्यत इति पदं तुरीयं अश्नुते प्राप्नोतीत्यर्थः ।। ७ ।।

नन्वनाद्यविद्याबद्धस्य जाग्रत्स्वप्नभ्रमयोर्विपर्यासक्षय एव कथं स्यादित्यतो यदा सद्गुरूपदेशादिना भगवत्प्रबोधदयस्तदैवेत्याशयेनाह ।। **अनादीति** ।। अनादेर्विष्णोरनादिभूतया मायया इच्छया तदधीनया प्रकृत्याच सुप्तः स्वापितो जीवो यदा ईश्वरेच्छयैव सद्गुरूपदेशेन प्रबुध्यते प्रबोधमायाति श्रवणादिमान् भवतीतियावत्। तदा अजं जनिरहितं। अनिद्रं अज्ञानरहितं। अस्वप्नं स्वप्नाद्युपलक्षित जाग्रदाद्यवस्थातीतं । अद्वैतं अन्यथाज्ञानशून्यं भगवंतं । बुध्यतेऽपरोक्षतो जानातीत्यर्थः । अनंतरं विपर्यासक्षयो भवतीति भावः ।। ८ ।।

नन्वहंममेत्यादिस्वस्वामिभावसंबंधरूपप्रपंचो यदि जीवस्वभावः स्यात् तदा भगवत्प्रसादादपि कथमसौ निवर्तेतेत्याशंकायां स न जीवस्वभावः किंत्वाभिमानिको भगवदिच्छाधीन एव अतस्तज्ज्ञानजनितात्तत्प्रसादान्निवृत्त्युपपत्तिरित्याशयेनाह ।। **प्रपंच इति** ।। देहादिनिरूपितः स्वस्वामिभावरूपः प्रपंचो जीवस्याभिमानाद्विद्येत अस्वाभाविकतयाऽभगवद्वशत्वेन च विद्यत इत्यंगीकारो यदि भवेत्तथापि भगवज्ज्ञानान्निवर्तेतैव नात्र संशय इत्यर्थः । ननु भगवज्ज्ञानादपि कथं तन्निवृत्तिरित्यतो भगवदिच्छाधीनत्वात्तस्य तदिच्छयैवनिवृत्तिर्युक्तेत्याशयेनाह ।। **मायामात्रमिति** ।। यत् महद्भिरनन्यथाज्ञातत्वादद्वैतं ब्रह्म तदिदं द्वैतं अज्ञैरन्यथाज्ञातं । तच्चान्यथाज्ञानं परमार्थतः तसेः सार्वविभक्तिकत्वात्पंचमी पष्ठ्यर्थे परमार्थस्योत्तमार्थस्य परमेश्वरस्य मायामात्रमिच्छानिर्मितं यस्मात्तस्मात्तदिच्छयैव निवर्तत इत्यर्थः ।। ९ ।।

उपसंहरति ।। **विकल्प इति** ।। अत्रात इत्युपस्कर्तव्यं । केनचित्कल्पितो यदि विकल्प इत्यन्वयः । तथाचातः केनचिदज्ञानादिना कारणेन कल्पितत्वादेव । यदि "यदिशब्दस्त्ववस्तुत्व"इत्येकादशस्कंधतात्पर्ये । अत्रत्ययदिशब्दस्यावस्तुत्वार्थत्वेन व्याख्यातत्वादवस्तुभूतो विकल्पः शरीरादिनिरूपितः स्वस्वामिभावसंबंधः । उपदेशात् गुरुकृताद् भगवदुपदेशाच्छ्रवणादिरूपात्तज्ज्ञानादपरोक्षज्ञानद्वारा निवर्तत इत्यर्थः । तदनंतरमानंदाविर्भावरूपां मुक्तिं चेतीति सिद्धमिति वाक्यशेषो द्रष्टव्यः । तत आनंदमेत्यसावित्युक्तत्वात् । अत्र लिङादेर्वस्तुस्थितिकथनपरत्वमेवाभिप्रेतं न प्रसंगार्थत्वमित्यवगंतव्यं । नन्वयमुपसंहारोऽनुपपन्नः । अज्ञानादिकल्पितस्य विकल्पस्य भगवज्ज्ञानान्निवृत्त्यनंतरमानंदाविर्भावरूपां मुक्तिमेतीत्यस्यार्थस्याप्रामाणिकत्वादित्याशंकापरिहाराय आह ।। **अयं वाद इति** ।। ब्रह्मणिज्ञाते सति । द्वैतं स्वस्वामिभावसंबंधज्ञानरूपमन्यथाज्ञानं नविद्यते निवर्तते । तदनंतरमानंदाविर्भावरूपां मुक्तिमेतीत्ययं सतां वादः सिद्धान्तः। अतो नात्राप्रामाणिकत्वशंका कार्येतिभावः ।। १० ।।

**।। इतिमाण्डूकखंडार्थे द्वितीयखण्डः ।।**

## अथ तृतीयः खंडः

### उपनिषत्

**सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकार मकार इति । जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामाना-दिश्च भवति य एवं वेद ।।**

### भाष्यम्

**अधिकं सर्वत अविनाशि चेत्यध्यक्षरम् । अधिका एव मात्रा अंशा यस्य तदधिमात्रम् । अ इत्यनेनाभिधानेनाक्रियत इत्यकारः । तत्र पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः । अकार इत्यादिकं विधेयम् । प्राज्ञस्तै-जसश्चादिरस्येति आदिमान् । सुप्तेरुत्थाने प्राज्ञाद् विभक्तो भवति विश्वः । स्वप्नादुत्थाने तैजसात् । आदिश्चास्येपासकस्य भवति ।**

### श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - एवं चतुरो विश्वादीन्निरूप्य तेषां प्रणवांशाकारादिप्रतिपाद्य-त्वादि वक्तुमुक्तमनुवदति ।। **सोयमात्माध्यक्षरमोंकार इति** ।। यद्वक्तुमुक्त-मनूदितं तद्वक्तुं प्रस्तावयति ।। **अधिमात्रमिति** ।। अधिका मात्रा यस्य तदधिमात्रमित्युक्ता मात्राः का इत्यत आह ।। **पादा मात्रा इति** ।। पादाश्च क इत्यतोऽकारादिप्रतिपाद्या विश्वादयस्त इत्याह **अकार इति**। अत्र नादप्रतिपाद्यस्तुरीयोपि ग्राह्यः । सोयमात्मा चतुष्पादित्युक्तत्वात्। कः प्रथमः पादः कच द्वितीयतृतीयचतुर्थाः किंचाकारादीनां विश्वादिषु प्रवृत्तिनि-मित्तं किंच तद्युक्ततया तद्वेत्तुःफलमित्यतः क्रमेणसर्वमाह ।। **जगरितस्थान इत्यादिना** ।।

**भाष्यार्थः** - अध्यक्षरमधिमात्रमिति पदद्वयमन्यथाप्रतीतेः व्याचष्टे ।। **अधिकमित्यादिना** ।। अकार उकार मकार इत्येतद्ब्रह्मणोकाराद्यात्म-कत्वार्थप्रतीतिं निवारयन् उपलक्षणत्वेन व्याचष्टे ।। **अइति** ।। जागरितस्थानो वैश्वानरोकारः प्रथमा मात्रेत्यादौ कोनुवादः किं विधेयमिति

न ज्ञायते तद्दर्शयति ।। **तत्रेत्यादिना** ।। आप्तेरादिमत्त्वादित्यत्राप्तेः सर्व-विपयानयनादिति सुलभोर्थः । आदिमत्त्वं नाम किमित्यतस्तद्व्याचष्टे ।। **प्राज्ञइति** ।। तैजसप्राज्ञादिमत्त्वं विश्वस्य कथमित्यतस्तद्दर्शयति ।। **सुप्तेरिति** ।। तैजसाद्विभक्तो भवतीत्यनुवर्तते । उपासक आदिश्च भवतीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे ।। **आदिश्चेति** ।।

## प्रकाशिका

'आप्तेरादिमत्वाद्वा' इत्यत्र आप्लृ व्याप्ताविति धातोरौणादिके प्रत्यये कृते टिलोपे च सति अन्तर्णीतणिजर्थतायां च विषयानापयति जीवस्येति अः अशब्दवाच्यः । आप्तः तैजसात् प्राज्ञाद्वा बहिः प्राप्तश्च अकारवाच्य इति भावः ।

## भाष्यविवृतिः

एवं चतुरो विश्वादीन्निरूप्य तेषां प्रणवांशाकारादिप्रतिपाद्यत्वादि वक्तुमु-क्तमनुवदति ।। **सोऽयमात्माऽध्यक्षरमिति** ।। सोऽयमात्मा चतुष्पात्वेनोक्तो भगवान् अध्यक्षरम् अधिकं सर्वतोऽविनाशि चेत्यध्यक्षरम् । अक्षरत्वमुक्तम् अधिकत्वं विधेयम् । अधिमात्रं अधिका एव मात्रा विश्वदयोंऽशा यस्य तदधिमात्रम् । कास्ता मात्रा इत्यतस्ता दर्शयति ।। **अकार उकार मकार इति** ।। अ इत्याक्रियमाणो विश्वः उ इत्याक्रियमाणस्तैजसः म इत्याक्रिय-माणः प्राज्ञः । अकारः क इत्यत आह जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । अकारो विधेयः शिष्टं पूर्वोक्तानुवादः । एवं तैजसप्राज्ञयो-रपि उकार इति मकार इति च विधेयं शिष्टमनुवादः इति अवेत । अकारः आप्तेरादिमत्वाद्वा । आप्तेरः आप्नोतेर्डप्रत्ययः । आदिमत्वादः । आदिशव्दात् तद्धिता इति बहुवचनज्ञापितो मत्वर्थे डः । पृषोदरादित्वाद् दलोपः आकारह्रस्वत्वं च । विश्वस्यादिमत्वं च प्राज्ञस्तैजसश्चादिरस्येति सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति विश्व इति प्राज्ञो विश्वस्यादिः । स्वप्नादु-त्थाने तैजसाद्विभक्तो भवति विश्व इति तैजसो विश्वस्यादिः । वेदितुः फलमाह तात्पर्यद्योतनाय ।। **आप्नोति हवैसर्वान् कामान् आदिश्चभवति** ।। अस्योपासकस्येति शेपः । उपासकः स्वामिनं लभत इतियावत् ।

## भाष्यार्थरत्नावलिः

अयमात्मा ब्रह्मेत्यध्यात्मरूपस्यापि ओंकारार्थतया देशकालगुणैः पूर्णत्वं प्रतिज्ञाय सोऽयमात्माचतुष्पादिति तस्य चतूरूपत्वमुक्त्वा तन्महात्म्यं खंडद्वयेनोपपादितं । अधुना तेषां रूपाणां प्रणवांशाकारादिप्रतिपाद्यत्वं वक्तुमुक्तमनूद्यते ।। **सोऽयमात्मेत्यादिना मन्त्रा इत्यन्तेन** ।। अत्र विश्वादीनां अकारादिप्रतीकतया तदभेदेनोपास्यत्वमुच्यत इति अन्यथा प्रतीतेः खंडं व्याकुर्वन् अध्यक्षरमधिमात्रमिति पदद्वयं व्याचष्टे ।। **अधिकमिति** ।। ततश्चायं मन्त्रार्थः । स प्रकृतोयमात्माऽऽत्मान्तर्याम्यध्यक्षरं । सर्वस्माद्देशतःकालतश्च गुणतश्चाधिकमविनाशिचेत्यध्यक्षरं । ओंमित्यनेनाक्रियमाणत्वादोंकारः । अधिकाः पूर्णा मात्रा अंशा एव यस्य तदधिमात्रं। कास्तामात्रा इत्यत उक्तं ।। **पादाइति** ।। विश्वादयश्चत्वारः पादा एव मात्रा उच्यन्त इति पूर्वोक्तमनूद्य तेषां विश्वादीनामकारादिप्रतिपाद्यत्वं सामान्यतो विधीयते ।। **अकार इति** ।। तदकाराद्यभेदनिरासायोपलक्षत्वे नाकार इत्येतद्व्याचष्टे ।। **अ इतीति** ।। उपनिषदि आद्यर्थे इतिशब्दः ।

तथाच विश्वाद्याः पादः अकार "अ" इत्यनेन प्रतिपाद्यः । उकार "उ" इत्यनेन प्रतिपाद्यः । मकारो "म" इत्यनेन प्रतिपाद्यः । इति एवमेव नादप्रतिपाद्यश्चेत्यर्थः । केते चत्वारःपादाः तत्र कः प्रथमः ? केच द्वितीयतृतीयचतुर्थाः ? तत्राकाराद्याः किं सर्वेषां वाचकाः उत प्रतिनियताः। प्रतिनियतत्वपक्षे कोवर्णः कुत्रनियतः किंच तेषां तत्र वृत्तौ निमित्तं किं वा तद्युक्ततया तद्धेतुः फलमित्याशंकायां सर्वं क्रमेणोच्यते ।। **जागरितस्थानइत्यादिना** ।। ननु तृतीयस्मिन् खण्डे जागरितस्थानो वैश्वानरः प्रथमामात्रा स्वप्नस्थानस्तैजसः द्वितीयामात्रा । सुप्तिस्थानः प्राज्ञः तृतीयामात्रेत्यादिकं जागरितस्थानो वैश्वानरः प्रथमःपाद इत्यादिना गतार्थं । चतुर्थे खण्डेच चतुर्धा व्यवहारभागित्यादिना । अव्यवहार्यं प्रपञ्चोपशममित्यादिना गतार्थं किमिह पुनरुच्यत इत्यत आह ।। **तत्रेति** ।। तत्र एतेषु वाक्येषु । प्रथम वाक्ये जागरितस्थानत्वेन पूर्वोक्तवैश्वानरः प्रथमा मात्रेत्याद्यनुवादः । द्वितीये स्वप्नस्थानस्तैजसो द्वितीयामात्रेत्यनुवादः । तृतीये स्वप्नस्थानः प्राज्ञः

तृतीयामात्रेत्यनुवादः । चतुर्थे चाव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत इत्यनुवाद इत्यर्थः । व्यर्थोयमनुवाद इत्यत आह ।। **अकारइत्यादिकमिति** ।। प्रथमे अकारइति । द्वितीये उकार इति । तृतीये मकार इति । चतुर्थे ओंकारइत्यकारत्वादिकं विधेयमित्यर्थः । तथाच जागरितस्थानः प्रथमामात्रा वैश्वानर इत्यनेन वर्णेनाक्रियमाणः तत्प्रतिपाद्यः । आप्तेः विषयप्रापयितृत्वादादिमत्वात्प्राज्ञः तैजसलक्षणस्वकारणवत्वाच्च । एवं वेत्तुः फलमुच्यते ।। **आप्नोतीति** ।। य एवं वेद ससर्वान्कामान् काम्यान्विषयानाप्नोति वै आप्नोत्येवेति प्रसिद्धं । किंचास्योपासकस्य वैश्वानर आदिरमुक्तावुत्पादको भवति । स्वप्नस्थानो द्वितीयामात्रा तैजस उकारः उत्कर्षाद्देहाभिमानादुद्धृत्य स्वप्नमंडलं प्रति जीवकर्षकत्वात् उभयत्वनिद्राविषयलाभश्चेति उभयं प्रति साम्येन कर्तृत्वाच्च । य एवं वेद समुक्तौ ज्ञानस्य सम्यक् सर्वकाले ततिं विस्तारं नित्यतामिति यावत् । उत्कर्षति संपादयति । समानः सर्वमोक्षिणां मध्यस्थो विरुद्धश्च भवति । अस्य कुले अब्रह्मवित् न भवति न जायते सुप्तिस्थानः प्राज्ञस्तृतीयामात्रा । प्राज्ञो मकारः कुतः मितेः सुप्तौ जीवस्य स्वांतर्गमकत्वात् । अपीतेः अप्ययकर्तृत्वात् । जीवस्य बाह्यांतर्ज्ञानलयकर्तृत्वादिति यावत् । "मानमंतर्गतिः स्मृते"ति वक्ष्यमाणत्वात् । "मानं ज्ञानं लयश्चे"ति वचनाच्चांतर्गमकत्वं ज्ञानलयकर्तृत्वंच मकारार्थ इति ज्ञेयम् । य एवं वेद स इदं सर्वं जगन्मिनोति स्वप्रकाशस्यान्तर्गमयति दुःखादेरपीतिः लयकर्ताच भवतीत्यर्थः । आप्तेरादिमत्वाद्वेत्यत्राप्तिरित्यस्य प्रमाणे अर्थस्य स्फुटत्वादादिमत्वादित्येतत् प्रथम रूपत्वादित्यन्यथाप्रतीतिं वारयितुं व्याचष्टे ।। **प्राज्ञ इति** ।। तदुपपादयति ।। **सुप्तेरिति** ।। उपासकोपि स्वयमादिर्विश्वो भवतीति प्रतीतेर्व्याचष्टे ।। **आदिश्चेति** ।।

## पदार्थदीपिका

एवं चतुरोविश्वादीन्निरूप्य तेषामेव चतुर्णां प्रणवांशाकारोकारमकारनादप्रतिपाद्यत्वरूपं महिमानं वक्तुमुत्तरखण्डद्वयं। तत्राद्यखंड विश्वादीनां त्रयाणां प्रणवांशाकारादित्रयप्रतिपाद्यत्वं वक्तुं अनूद्यते ।। **सोयमात्माध्यक्षरमोंकार**

**इति** ।। तत्राध्यक्षरपदमन्यथाप्रतीतिनिरासाय व्याचष्टे ।। **अधिकमिति** ।। अधिकत्वस्यावधिसापेक्षत्वात्सर्वत इत्युक्तं । यदर्थमुक्तमनूदितं तत्प्रस्तावयितुं प्रवृत्तं । अधिमात्रमित्यादि । तत्राधिमात्रशब्दार्थमाह ।। **अधिका इति** ।। पूर्णा इत्यर्थः । अकार इत्यादौ अकाराद्यभेद एवोच्यत इत्यन्यथाप्रतीतिनिरासायाह ।। **अ इत्यनेनेति** ।। आक्रियते व्यवह्रियते । वैश्वानरोकारःप्रथमामात्रा इत्यत्र यथास्थितवाक्यवृत्तावसिद्धस्यानुवादः सिद्धस्य वोधनमित्यापद्यते तच्चायुक्तं । "सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत" इति न्यायविरोधापत्तेरतोव्याचष्टे ।। **तत्रेत्यादिना** ।। तत्र विश्वादिचतुर्षु पूर्वोक्तःजागरितस्थान इत्युक्तः । इत्याद्यनुवाद इत्यत्रेत्यादिपदेन स्वप्नस्थानस्तैजसो द्वितीयामात्रेत्यस्य सुपुप्तस्थानः प्राज्ञस्तृतीयामात्रेत्यस्य चसंग्रहः । द्वितीयादिपदेन उकारमकार इत्यस्य ग्रहणं । विश्वस्याकारवाच्यत्वे निमित्तद्वयं कथ्यते आप्तेरादिमत्त्वाद्वेति ।। तत्र विश्वस्यादिमत्त्वमप्रतीतेर्व्याचष्टे । ।। **प्राज्ञ इत्यादिना** ।। अस्य विश्वस्य। ननु विश्वं प्रति प्राज्ञतैजसयोः कथं कारणत्वापरपर्यायरूपमादिमत्वमित्यतस्तदुपपादयति ।। **सुप्तेरित्यादिना** ।। सुपप्त्यवस्थापन्न एव जीवस्ताडनादिना कदाचित्सहसैव जागर्तीत्यनुभवसिद्धं । तदभिप्रायेण सुप्तेरित्याद्युक्तं । स्वप्नं पश्यन्नेव कदाचिज्जागर्तीत्यप्यनुभवसिद्धं । तदभिप्रायेण स्वप्नादीत्यादि । आप्त्यादिमत्त्वाभ्यां निमित्ताभ्यां अकारवाच्यतया विश्ववेत्तुः फलप्रतिपादके आप्नोतीत्यादिवाक्ये आदिश्च भवतीत्येतत् उपासकःस्वयमादिर्भवतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे ।। **आदिश्चेति** ।। विश्व इतिवर्तते । मुक्तिकारणमित्यर्थः ।

## उपनिषत्

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद् वा उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ।।**

## भाष्यम्

**शरीराभिमानादुत्थाप्य कर्षतीत्युत्कर्षः । निद्रा विषयानुभवश्चानेन क्रियत इत्युभयत्वम् । समानः सर्वेषां मध्यस्थो भवति ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - देहादात्मानमुत्कर्षतीतिवा ।

**भाष्यार्थः** - तैजसस्योक्तमुत्कर्षत्वमुभयत्वं च किमित्यत आह ।। **शरीरेति** ।। अप्रतीतेः समानश्चेति पदं व्याचष्टे ।। **समानइति** ।।

## प्रकाशिका

'निद्रा विषयानुभवश्चानेन' इत्यत्र स्वप्नदशायामपि निद्रायाः सत्त्वात् प्राज्ञसाम्यम् । वाह्यविषयानुभवाद् विश्वसाम्यमित्युभयत्वमित्यर्थः ।

## भाष्यविवृतिः

शरीराभिमानादुत्थाय कर्षतीत्युत्कर्षः । उत्पूर्वात् कर्षतेर्डुप्रत्ययः । धातुलोपः दुरीणोलोपश्चेति दूरमिति यथा। डित्वेनोदो लोपः प्रत्ययोकारस्य शेषः । उभयत्वाद्वा निद्राविषयानुभवश्चानेन क्रियत इत्युभयत्वम् । उभय-शब्दादेवमेव पृषोदरादिन्यायः । फलमाह उत्कर्षति हवै ज्ञानसन्ततिं समानश्च भवति । अस्य कुलेऽब्रह्मविन्न भवति । समानःस्वात्मानं देहादुत्कृष्य दोषाभावात् स्नेहाच्च मोक्षिणां सर्वेषां मध्यस्थो भवति ।

## भाष्यार्थरत्नावलिः

विश्वापेक्षयोत्कृष्टत्वात्तेन साकमुभयत्वाच्चेत्यन्यथा प्रतीतेर्व्याचष्टे ।। **शरीराभिमानादिति** ।। उत्कर्षति । स्वप्नमण्डलं प्रतीति शेषः । निद्रा वाह्येन्द्रियोपरतिः । विषयानुभवः स्वाप्नविषयभोगः समानः उभयमध्यस्थः तैजसो भवतीत्यन्यथाप्रतीतेर्व्याचष्टे ।। **समान इति** ।। सर्वेषां मुक्तानां ।

## पदार्थदीपिका

तैजसस्य उकारवाच्यत्वे निमित्तद्वयकथानायोत्कर्षादुभयत्वाद्वेत्येतद्वाक्यं प्रवृत्तं । तत्र तैजसस्योत्कर्षत्वमुभयत्वं चकीदृशमित्यतो विवृणोति ।। **शरीरेति** ।। तैजसो जीवं वाह्यशरीराभिमानादुत्थाप्योद्धृत्य अभिमानं नाशयित्वेति यावत् । स्वप्नस्थाने देहांतर्वासनामयपदार्थानुभवाय कर्षतीत्यर्थः ।। **विषयेति** ।। स्वप्नविषयेत्यर्थः । प्रवृत्तिनिमित्तद्वयेन उकारवाच्यत्वं तैजसस्य वेत्तुःफलप्रतिपादनाय प्रवृत्तं ।। **उत्कर्षतिहेत्यादि** ।।

तत्र समान इत्येतद्व्याचष्टे ।। **समान इति** ।। सर्वेषां मुक्तानां । स्नेहाद्दोपाभावाच्चेति शेषः ।

## उपनिषत्

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ।।**

## भाष्यम्

**मितेरन्तर्गमनात् ।**

'अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतः ।
येऽशास्तस्य तु सर्वेऽपि पूर्णाः प्रत्येकशः प्रभोः ।।

अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः ।।

आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद् यतः ।
जीवस्य तु यतः प्राज्ञात् तैजसाद् वा समुत्थितः ।।

अविभागोऽपि भगवानादिमांस्तेन कीर्तितः ।
तस्मादुत्पद्यते मुक्तस्तज्ज्ञानानन्दलक्षणः ।।

आप्नोति विषयान् सर्वान् निद्राया विषयस्य च ।
उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः ।।

देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् ।।

आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् ।
मध्यस्थःस भवेत् स्नेहाद् दोषाभावाच्च सर्वशः ।।

स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता ।
जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद् यतः ।।

प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः ।
व्याप्त्यान्तर्गमयेत् सर्वं दुःखाद्यं तु विलापयेत् ।।

**अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।**
**अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् ।**
**अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत् ।।'**

इति ब्रह्मतर्के ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**भाष्यार्थः** - मितेरपीतेरित्येतदप्रतीतेः व्याचष्टे ।। **मितेरिति** ।। अपीतेर्लयकृत्त्वाच्चेत्यपि ग्राह्यं । सोयमात्माध्यक्षरमित्यादि स्पष्टप्रमाणेन व्याचष्टे ।। **अधिकत्वादित्यादिना** ।। तस्यांशाः पूर्णाश्चेदध्यंशमिति स्यात् नत्वधिमात्रमित्यत उक्तं ।। **मात्राइति** ।। आदिश्च भवतीत्यस्यार्थः तस्मादिति । आप्नोति हवै सर्वान्कामान् इत्यस्यार्थः ।। **आप्नोतीति** ।। उभयत्वाद्वेत्यस्यार्थमाह ।। **निद्राया इत्यादिना** ।। उत्कर्षादित्यस्यार्थमाह ।। **देहेत्यादिना** ।। उत्कर्षति हवै ज्ञानसंततिं समानश्च भवतीत्यस्यार्थमाह ।। **तज्ज्ञानीत्यादिना** ।। तज्ज्ञानिनः सर्वमोक्षिणां मध्यस्थत्वं च दोषाभावात्स्नेहाच्च । मितेरपीतेर्वा मिनोतिहवा इदं सर्वमपीतिश्च भवतीत्यादेरर्थमाह ।। **सर्वश इत्यादिना** ।। सर्वशः सर्वं । मानं मितिः ।। ननु मुक्तो जीवो व्याप्त्यांतर्गमयेत्सर्वमित्युक्तमयुक्तं जीवस्याणुत्वादित्यतः प्रकाशव्याप्त्या तद्घटयन्नाह ।। **अणूनामपीति** ।।

## प्रकाशिका

माङ् मान इति धातोः, मृङ् प्राणत्याग इति धातोश्च धुप्रत्यये कृते मु इत्येवशब्दस्वरूपमुर्वरितं भवति । मितिश्च धान्यादीनां स्वान्तःप्रापके मान इव जीवस्य स्वान्तःप्रापणमेव । देहाभिमानादीनां नाशकत्वात् मुशब्दवाच्य इति भावेनोक्तम् - **मितेरपीतेर्वेति** । तत्र मितिः केत्यत उक्तं भाष्ये - **मितेरन्तर्गमनादिति** । अपीतिश्च भवतीत्यत्रापीतिः सकलदोषाणां नाशः । मिनोतीत्यस्य स्वावरमुक्तान् स्वान्तः प्रापयतीत्यर्थः । 'उत्तरेषूत्तरेष्वेवं यावद्वायुं प्रविश्य' इति वचनात् । अधिकाः पूर्णाः मात्राः अंशा यस्येति तदधिमात्रमिति व्युत्पत्तिमभिप्रेत्याह ।। **अंशा इति** ।। तस्मादुत्पद्यते मुक्त इत्यनेनोपासकस्याप्त्यादिमत्त्वं फलं सूचितम् । आप्नोति विषयानित्यनेना-

तत्र समान इत्येतद्व्याचष्टे ।। **समान इति** ।। सर्वेषां मुक्तानां । स्नेहाद्दोपाभावाच्चेति शेषः ।

## उपनिषत्

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ।।**

## भाष्यम्

**मितेरन्तर्गमनात्** ।

'अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतः ।
येऽशास्तस्य तु सर्वेऽपि पूर्णाः प्रत्येकशः प्रभोः ।।

अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः ।।

आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद् यतः ।
जीवस्य तु यतः प्राज्ञात् तैजसाद् वा समुत्थितः ।।

अविभागोऽपि भगवानादिमांस्तेन कीर्तितः ।
तस्मादुत्पद्यते मुक्तस्तज्ज्ञानानन्दलक्षणः ।।

आप्नोति विषयान् सर्वान् निद्राया विषयस्य च ।
उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः ।।

देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् ।।

आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् ।
मध्यस्थःस भवेत् स्नेहाद् दोषाभावाच्च सर्वशः ।।

स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता ।
जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद् यतः ।।

प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः ।
व्याप्त्यान्तर्गमयेत् सर्वं दुःखाद्यं तु विलापयेत् ।।

**अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।**
**अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् ।**
**अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत्।।'**

इति ब्रह्मतर्के ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**भाष्यार्थः** - मितेरपीतेरित्येतदप्रतीतेः व्याचष्टे ।। **मितेरिति**।। अपीतेर्लयकृत्त्वाच्चेत्यपि ग्राह्यं । सोयमात्माध्यक्षरमित्यादि स्पष्टप्रमाणेन व्याचष्टे ।। **अधिकत्वादित्यादिना** ।। तस्यांशाः पूर्णाश्चेदध्यंशमिति स्यात् नत्वधिमात्रमित्यत उक्तं ।। **मात्राइति** ।। आदिश्च भवतीत्यस्यार्थः तस्मादिति । आप्नोति हवै सर्वान्कामान् इत्यस्यार्थः ।। **आप्नोतीति** ।। उभयत्वाद्वेत्यस्यार्थमाह ।। **निद्राया इत्यादिना** ।। उत्कर्षादित्यस्यार्थमाह ।। **देहेत्यादिना** ।। उत्कर्षति हवै ज्ञानसंततिं समानश्च भवतीत्यस्यार्थमाह ।। **तज्ज्ञानीत्यादिना** ।। तज्ज्ञानिनः सर्वमोक्षिणां मध्यस्थत्वं च दोषाभावात्स्नेहाच्च । मितेरपीतेर्वा मिनोतिहवा इदं सर्वमपीतिश्च भवतीत्यादेरर्थमाह ।। **सर्वश-इत्यादिना** ।। सर्वशः सर्वं । मानं मितिः ।। ननु मुक्तो जीवो व्याप्त्यांतर्गमयेत्सर्वमित्युक्तमयुक्तं जीवस्याणुत्वादित्यतः प्रकाशव्याप्त्या तद्घटयन्नाह ।। **अणूनामपीति** ।।

## प्रकाशिका

माङ् मान इति धातोः, मृङ् प्राणत्याग इति धातोश्च धुप्रत्यये कृते मु इत्येवशब्दस्वरूपमुर्वरितं भवति । मितिश्च धान्यादीनां स्वान्तःप्रापके मान इव जीवस्य स्वान्तःप्रापणमेव । देहाभिमानादीनां नाशकत्वात् मुशब्दवाच्य इति भावेनोक्तम् - **मितेरपीतेर्वेति** । तत्र मितिः केत्यत उक्तं भाष्ये - **मितेरन्तर्गमनादिति** । अपीतिश्च भवतीत्यत्रापीतिः सकलदोषाणां नाशः । मिनोतीत्यस्य स्वावरमुक्तान् स्वान्तः प्रापयतीत्यर्थः । 'उत्तरेषूत्तरेष्वेवं यावद्वायुं प्रविश्य' इति वचनात् । अधिकाः पूर्णाः मात्राः अंशा यस्येति तदधिमात्रमिति व्युत्पत्तिमभिप्रेत्याह ।। **अंशा इति** ।। तस्मादुत्पद्यते मुक्त इत्यनेनोपासकस्याप्त्यादिमत्त्वं फलं सूचितम् । आप्नोति विषयानित्यनेना-

प्तिरूपफलं चोक्तम् । 'तं यथा यथोपासते तथैव भवति' इति श्रुतिः । 'उत्कर्षति हवं ज्ञानसन्तितिम्' इत्यत्र ज्ञानसन्ततिं जीवे देहादुत्कर्षतीत्यर्थः। 'तज्ज्ञानलयकृद्यतः' इत्यत्र ज्ञानं बाह्यविषयकज्ञानम् ।

## भाष्यविवृतिः

मितेः सर्वस्य जीवस्य स्वस्मिन् प्रक्षेपणादन्तर्गमनात् "म्" इत्युक्तः प्राज्ञः । मिनोतेः प्रक्षेपकर्मणः क्विप् सच डित् । अपीतेर्वा "म्"जीवमन्तर्गतं कृत्वा यतस्तज्ज्ञानलयकृत् । अपिशब्द एवापीतिरित्यर्थे वर्तते । धात्वसन्निहितानाम् उपसर्गणां ससाधनक्रियाभिधायकत्वात् । "वष्टि भागुरिरल्लोप"मिति वचनात् अलोपः । पृषोदरादिन्यायेनेकारलोपः पकारस्य मकारश्च । फलमाह ।। **मिनोति हवा इदं सर्वं** ।। जगत् प्रकाशेनान्तर्गमयति दुःखं विलापयतीति अपीतिः । कथमणौ जीवे सर्वस्यान्तर्गतिः ? अणूनामपि जीवानां प्राकाशतो व्याप्तेरभ्युपगमात् । देवतानांतु ब्रह्माण्डमात्रे बहिश्च यथाक्रमं अन्तर्गमनं मुक्तौ बोध्यम् ! एवं जगतोऽन्तर्गमनं मुक्तौ जीवेषु भवतीत्यवेत ।

## भाष्यार्थरत्नावलिः

मितेरपीतेर्वेत्यत्रापीतिशब्दस्य लयपरत्वं सुगमं । "मात्रासंप्रतिपत्तौ स्याल्लयसामान्यमेवच" इति मंत्रोदाहरणात् । अतस्तत्त्यक्त्वा मितेरित्येतत्प-रिच्छिन्नत्वादित्यन्यथा प्रतीतेर्व्याचष्टे ।। **मितेरिति** ।। अंतर्गमनात् जीवस्य स्वांतर्गमनकर्तृत्वान् । सोयमात्माध्यक्षरमित्यादेरुक्तमर्थं प्रमाणेन दृढयति ।। **अधिकत्वादित्यादिना** ।। तस्यांशाः पूर्णाश्चेदध्यंशा इति स्यान्नत्वधिमात्रमि-तीत्यत उक्तम् ।। **मात्रा इति** ।। ओंकाराभेदप्रतीतिवारणाय व्याचष्टे ।। **श्रुत इति** ।। तस्यांशाः पूर्णाः सविष्णुरिति योज्यं । आप्तेरित्यस्येष्टत्वा-दित्यन्यथा प्रतीतेर्व्याचष्टे ।। **आद्य इति** ।। आदिमत्वादित्यस्यार्थः सुप्तित इति । जीवस्येति देहलीदीपन्यायेनात्रापि संबध्यते । येन कारणेन भगवा-नैश्वर्यादिमान्विश्वो जीवस्य सुप्तितः सुपुप्तितः स्वप्नाद्वा उत्थाने प्राज्ञात्तैजसाद्वा स्वयमविभागोऽप्यैश्वर्यात् समुत्थितो विभक्तस्तेनादिमान् कीर्तित इति योजना । आदिश्च भवतीत्येतदस्योपसाकस्यादिश्च भवतीति

व्याख्यातं । तदयुक्तं । "ज्ञोत एव" इत्यादौ जीवमात्रस्य भगवज्जन्यत्वोक्ते-रित्यतः प्रमाणेन विशेष उच्यते ।। **तस्मादिति**।। ज्ञानानन्दयोः सत्वमभिव्यक्तत्वं । "जातेगुणव्यतिकरे यथापूर्वं प्रजायते" इति तृतीयस्कंध-भागवते । "अन्यन्नवतरं कल्याणतरं रूपं" इत्यादि वाजसनेयकेच स्पष्टमेतत् । "आप्नोति ह वै सर्वान् कामान्" इत्यत्र काम्यपदं काम्यंत इति व्युत्पत्तिमाश्रित्य विषयपरत्वेन व्याचष्टे ।। **आप्नोतीति** ।। उभयत्वा-दित्यस्य व्याख्यानं निद्राया इति । विषयस्य चेत्युभयोरिति योज्यं। जाग्रद्देहाभिमानादुधृत्य स्वप्नमण्डले स्वाप्नपदार्थसमुदायेऽभिमानमुत्पाद्य स्वप्नमण्डले स्वप्नस्थाने कर्षतीत्यर्थः । उत्कर्षतीत्यत्रोपास्यनिष्ठां ज्ञान-संततिं स्वस्मिन्नाकर्षतीत्यन्यथा प्रतीतेर्व्याचष्टे ।। **तज्ज्ञानीति** ।। समान इत्यस्यार्थः सर्वमोक्षिणामिति । मध्यस्थः कुत्रचित्स्नेहः कुत्रचिद्द्वेष इति न विषम इत्यर्थः । तदुपपादनं सर्वशः सर्वेषु स्नेहाद्दोषाभावाद्द्वेषादिदोषाभावा-च्चेति । यथोक्तं "अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदव-त्तदुक्तं"इति ।

प्राज्ञो मितेरपीतेश्च मकार इत्युक्तं केन निमित्तेन मितिरपीतिश्च प्राज्ञ इत्यत आह ।। **स्वात्मनि इति** ।। यतः प्राज्ञो जीवं स्वात्मन्यन्तर्गमयति अतो मानं मीयत अनेनेति मानमित्युच्यते । यतश्च जीवमंतर्गतं कृत्वा तज्ज्ञानलयकृदतोऽपीतिश्चोच्यत इति योजना । ननु धात्वर्थ रूपं मानं कथमंतर्गमनं येन तत्प्रापकत्वेन मितिशब्दवाच्यः स्यात् । "मानं ज्ञानं लयश्चैव मर्यादाचापि कथ्यत" इति ज्ञानादावेव प्रसिद्धत्वादित्यत उक्तं ।। **मानमिति** ।। "धात्वर्थरूपं मानमंतर्गतिरपिस्मृता" इत्यर्थः । ननु "प्राज्ञेनात्मना संपरिष्वक्तः" इति श्रुतेः कथं जीवस्य प्राज्ञांतर्गमनमिति चेन्न। सम्यक् परिष्वंगोनामांतर्गमनमेवेति विवक्षितत्वात् । "मिनोति ह वा इदं सर्वमपीतिश्च" इत्येतत् । य एवं वेद स इदमनात्मभूतं मिनोति क्षपयति स्वयं ब्रह्मण्यपीतो भवत्येकीभवतीत्यन्यथा प्रतीतेर्व्याचष्टे ।। **तज्ज्ञ इति** ।।

ननु कथमणोर्जीवस्य व्याप्तिरित्यतः प्रकाशव्याप्त्या तद्घटयन्नाह ।। **अणूनामिति** ।। जीवानां दवातिरिक्तानां अंडमात्र यथाक्रमं प्रकाशो

व्यापको भवेत् । देवानां त्वंडे वहिश्चापि यथाक्रममिति योज्यं । देवातिरिक्तानां पौत्रायणरैक्वप्रियव्रतप्रभृतीनां संसारेऽपि प्रकाशव्याप्तेः सुप्तसिद्धत्वात् । अस्मदादीनामपि वाह्यचक्षुःप्रकाशानुविद्धस्य स्वरूपचक्षुःप्रकाशस्य ध्रुवादिमंडलपर्यंतं विततत्वस्य "तद्यथाऽणुनश्चक्षुषः प्रकाशो व्यातत एवमेवास्य पुरषस्य प्रकाशो व्याततः" इति श्रुतिसिद्धत्वात् । तन्न्यायेन स्वरूपदेहप्रकाशस्यापि कियद्दूरं व्याप्तिसंभवात् । संसारेऽप्यणोर्जिवस्य "गुणाद्वालोकवत्" इति शरीरे स्वरूपदेहमतिरिच्य प्रकाश गुण्यवस्थानस्य सिद्धत्वात् । संसारे विद्यमानस्य प्रकाशवैतत्त्यस्य मुक्तावभावायोगात् ।

ननु "संभृतिद्युव्याप्त्यापि चातः" इत्यधिकरणे "देवादीनामुपास्यास्तु भृतिव्याप्त्यादयोगुणाः" इति द्युव्याप्तेः देवाद्युपास्यतयोक्तत्वात्तत्फलभूत प्रकाशव्याप्तिरपि तेषामेव युक्ता न मानुषाणामिति चेन्न । चतुर्गुणोपसाकैर्जगदस्मृत्या द्युव्याप्तेरनुपास्यत्वेन जगद्व्याप्तप्रकाशालाभेपि प्रकाशविशिष्ट गुणाकारस्मृत्या मुक्तौ स्वरूपदेहमतिरिच्य प्रकाशविशेषस्याङ्गीकृतत्वात् । तदुक्तं न्यायविवरणे । "गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते । नव्याप्तिर्जगदस्मृत्या" इत्यदि । तत्वप्रकाशिकायांच "यच्च प्रकाशादिमात्रमपेक्षितं तच्च भगवत्प्राकाशाविनाभूतप्रकाशादिनैव" इति ।

## पदार्थदीपिका

प्राज्ञस्य मकारवाच्यत्वे निमित्तद्वयकथनाय प्रवृत्ते मितेरपीतेर्वेति वाक्ये मितेरित्येतद्व्याचष्टे ।। **मितेरिति** ।। अंतर्गमनात् स्वालिंगनप्रदानेन स्वांतर्जीवस्य गमयितृत्वादित्यर्थः । एवं स्ववाक्येन कानिचिद्वाक्यानि व्याख्याय खंडं व्रह्मतर्कवाक्येन व्याचष्टे ।। **अधिकत्वाच्चेत्यादिना** ।। अधीत्यस्याधिकत्वादिति नित्यत्वादित्यक्षरशव्दस्य येऽशा इत्यधिमात्रमित्यस्य व्याख्यानं । मात्रा अंशा इत्यनेन पादा मात्रा इत्येतद् व्याख्यातं भवति । आप्तेरित्येतद्व्याचष्टे ।। **आद्य इति** ।। आद्यः तदंशः तस्योंकारस्य य आद्योंऽशः अकारः स आप्तिः आप्तिवाचीस्यात्। तथा समग्रोंकारवाच्यस्य तस्य भगवतो य आद्योंऽशः अकारवाच्यो विश्वः सोपि जीवस्य विपयानापयेद्यत-

स्तस्मादाप्तिः । तच्छब्दवाच्यःस्यादिति योज्यं । आदिमत्वाद्वेत्येतद् व्याचष्टे ।। **यत इति** ।। अविभागोऽपि स्वतो भेदशून्योऽपि भगवान् विश्वः । आदिश्च भवतीत्यस्यार्थमाह ।। **तस्मादिति** ।। तज्ज्ञानी विश्वज्ञानी विश्वोपासकः मुक्त उत्पद्यते तस्य तात्पर्यमानंदेति । आनंदस्वरूपः तदुपासनेनानंदाविर्भावरूपा मुक्तिर्भवतीति यावत् । आप्नोति हवै सर्वान्कामानित्येतद्व्याचष्टे ।। **आप्नोतीति** ।। काम्यंतं इति कामा इति व्युत्पत्तिमभिप्रेत्य विषयानित्युक्तं । उत्कर्षादुभयत्वाद्वेत्यत्र पदद्वयं व्युत्क्रमेण व्याख्याति ।। **निद्राया इति** ।। मनो व्यतिरिक्तसर्वेंद्रियोपरमरूपाया इत्यर्थः। विषयस्य विषयानुभवस्य इत्युभयोः । कर्षति जीवं तैजसः । स्वप्नमंडले स्वप्नस्थाने देहांतरित्यर्थः । वासनामयपदार्थानुभवायेतिशेषः । यतः कर्षति ततः । उत्कर्षति हवैज्ञानसंततिमित्यस्यार्थमाह ।। **तज्ज्ञानीति** ।। स्वात्मानं देहादुत्कृष्य स्थितः तैजसज्ञानी मुक्तौ ज्ञाननित्यतां प्राप्नोतीति योज्यं । समानश्च भवतीत्येतद्व्याचष्टे ।। **सर्वमोक्षिणामिति** ।। अत्रापि देहादुत्कृष्य मोचयित्वा स्थितोऽयं मुक्तः सर्वमोक्षिणां मध्यस्थो भवेत् । अत्र निमित्तद्वयं ।। **स्नेहादित्यादि** ।। तैजसे अस्योपासकस्य स्नेहात् भक्तेः सत्वात्तथोपासके तस्मिन् तैजसाख्यभगवतः स्नेहात्प्रीतिसद्भावादित्यर्थः । यद्वा मुक्तानां परस्परस्नेहवत्त्वादित्यर्थः । दोषाभावत्सर्वशः साकल्येन रागादिदोषाभावादित्यर्थः । यथोक्तं । "अक्षरधियांत्वविरोधःसामान्यतद्भावाभ्यामौपसदवत्तदुक्तमि"ति ।

मितेरित्येतद्व्याचष्टे ।। **स्वात्मनीत्यादिना** ।। सर्वश इत्यस्यात्रापि संबंधः । सर्वशःसर्वमज्ञानावृतं जीवमात्मन्यंतर्गमयतीत्यर्थः । मितिशब्दात्कथमयमर्थोलभ्येतेत्यत आह ।। **मानमिति** ।। मितिरित्यर्थः । अंतर्गतं स्यांतर्गतं ।। **तज्ज्ञानेति** ।। तस्य जीवस्य यद्वाह्यपदार्थविषयकं ज्ञानं तस्य लयकृद्यतोऽत इति शेषः। मिनोति हवा इदं सर्वमिति वाक्यं व्याचष्टे ।। **तज्ज्ञोपीति** ।। प्राज्ञज्ञानीत्यर्थः अपीतिश्चभवतीत्येतद्व्याचष्टे ।। **दुःखाद्यंत्विति** ।।

ननु व्याप्त्यांऽतर्गमयेदित्यनेन विमुक्तिगा जीवः सर्वं जगत्व्याप्त्या स्वांतर्गमयेदित्युक्तं तदयुक्तं । जीवस्याणुत्वादित्यतो नात्र स्वरूपतो व्याप्तिर्विवक्षिता किंतु प्रकाशन एवेत्याह ।। अणूनामपीति ।। तथाच सर्वं जगत् प्रकाशापरपर्यायज्ञानव्याप्त्यांऽतर्गमयतीत्यर्थः। ज्ञानेन सर्वं विषयीकरोतीति यावत् । व्याप्त्यांतर्गमयेत्सर्वमित्युक्त्या ब्रह्मांडाद् बहिरपि विद्यमानसर्वपदार्थविषयकज्ञानप्रसक्तौ सत्यां सर्वशब्दः संकुचितवृत्तिरित्याशयेनाह ।। अंडमात्र इति ।। देवेतरेषामित्यर्थः । बहिः अंडात् । अंडमात्रप्रकाशो व्यापको भवेद्यतोऽमुक्तौ जीवेषु जीवज्ञानेषु ।। जगतोंतर्गमनमिति मिनोतिहवा इदं सर्वमिति वाक्योक्तमुपपन्नं भवेदित्यर्थः ।

## उपनिषत्

**अत्रैते श्लोका भवन्ति ।**

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ।।**

## भाष्यम्

**मात्रासम्प्रतिपत्तौ अंशध्याने । आदिमत्त्वं विश्वस्य विद्यते । तदुपासकस्यापि भवतीत्यादिसामान्यम् ।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - चतुर्थं पादममात्रश्चतुर्थ इति वक्ष्यति ।। एवमकाराद्यर्थयुक्तत्वेन विश्वाद्युपासकानामभीष्टकामावाप्त्यादिकं फलमुक्तं । तत्तथैवेति भावेन तत्र मंत्रान् प्रमाणयन्नाह ।। **अत्रैत इति** ।। मंत्रान् पठति ।। **विश्वस्येत्यादिना** ।। आदिसामान्यमादित्वेन साम्यं ।

**भाष्यार्थः** - मात्रासंप्रतिपत्तावित्येतदप्रतीतेर्व्याचष्टे ।। **मात्रेति** ।। विश्वस्यादित्वविवक्षायामादिसामान्यमित्युक्तमुपासकस्य भवदादिसामान्य किमिति नज्ञायतेऽतस्तदाह ।। **आदिमत्त्वमिति** ।। सुप्तेरुत्थान इत्यादिनोक्तप्रकारेणादिमत्त्वं विश्वस्य विद्यत इति योज्यं ।

## प्रकाशिका

'आदिसामान्यमुत्कटम्' इत्यत्र उत्कटमुत्कृष्टम्, आदिसामान्यमादिमत्त्वेन साम्यम् । इयांस्तु विशेषः - विश्वस्य प्राज्ञतैजसाख्यादिमत्त्वं । उपासकस्य तु स्वोपास्यविश्वाख्यादिमत्त्वम् । मुक्तौ परमानन्दप्रापकत्वादुपास्यविश्वाख्यादिमत्त्वं यदुपासकस्य तदुत्कटमुत्कृष्टमित्युक्तमिति । अंशध्यान इत्यस्य विश्वाख्यांशध्यान इत्यर्थः ।

## भाष्यविवृतिः

एवं विश्वादीनां अकारादिवाच्यत्वज्ञाने आप्नोतिहवा इत्यदिना विषयाप्त्यादिमत्वादिफलमवाचि । तत्र प्रमाणान्युदाहरति ।। **अत्रैत इति** ।। मात्रासम्प्रतिपत्तावंशध्याने । विश्वस्य यदा अत्वविवक्षा अत्वस्य दिध्यासा तदा आदिमत्वमेवोत्कटं भाति । आदिमत्वसाम्यं च भाविमुक्तविवक्षया तदुपास्यापि भवतीत्यादिसामान्यम् ।

## भाष्यार्थरत्नावलिः

एवमकाराद्यर्थतया विश्वाद्युपासकानां अभीष्टावाप्त्यादिकं फलमुक्तं। तत्र प्रमाणं प्रतिज्ञायोच्यते ।। **अत्रैत इत्यादिना** ।। "वैश्वानरोऽकारः प्रथमा मात्रा" इत्यादौ विश्वदीनामकाराद्यर्थत्वमुक्त्वा "आप्नोति ह वै सर्वान् कामानादिश्च भवति । यएवं वेद" इत्यादि तज्ज्ञानिनः फलमुक्तं । तत्रैवं वेदनं नाम किमित्यतः अवर्णादिवाच्यत्वोपासनं तत्प्रवृत्तिनिमित्त गुणाधिकरणतया तत्तन्मात्राध्यानं चेत्युपासनद्वयं विवक्षितं । गुणविशिष्टतया रूपध्यानवत् सर्वशब्दवाच्यत्वज्ञानस्यापि मोक्षसाधनतया नामायत्तासमतृप्यञ्छ्तंधीत्यादावुक्तत्वादिति भावेन द्विविधोपासनस्य फलमुच्यते मंत्रेण। ततश्चायं मंत्राणामर्थः । विश्वस्यात्वविवक्षायां अकारवाच्यत्वोपासनायां मात्रासंप्रतिपत्तौ तद्वाच्यगुणविशिष्टतया विश्वाख्यांशध्याने चोपासकस्योपास्येनादिसामान्यं विश्वः प्राज्ञतैजसलक्षणादिमान् उपासकोऽपि मुक्तौ भगवज्जन्यत्वादादिमानित्यादिमत्वेन साम्यं । आप्तिसामान्यं इष्टप्रापकतयोपासने स्वस्यापीष्टं भवतीत्याप्तिसाम्यं च उत्कटं स्फुटं स्यादेव । एवं तैजसस्योकारवाच्यत्वोपासने मात्रासंप्रतिपत्तावंशध्याने च तथाविधम्

तथाविधः । उत्कर्षत्वेनोपास्यगतोत्कर्षसदृश उत्कर्षः तथाविधमुपास्यगता-भयत्वसदृशमुभयत्वं च स्यात् । कुतः यतस्तद्द्वयं स्फुटं दृश्यत इति योजना । उपास्योपासकयोरुत्कर्षत्वोभयत्वमात्रेण साम्यं । उपास्यस्य देहाभिमानादुत्कर्षत्वं उपासकस्य ज्ञानसंतत्युत्कर्षत्वं । तत्रोभयत्वं निद्राविपर्ययोभयहेतुत्वं उपासकस्य स्नेहदोषाभावाभ्यां उभाभ्यां सर्वसमत्वमित्यवांतरविशेषो न विवक्षित इति भावः । तथा प्राज्ञस्य मकारभावे "म" इत्यनेनाक्रियमाणत्वभावनायां मात्रासंप्रतिपत्तौ चोपास्योपासकस्य मानसामान्यमंतर्गमनकर्तृत्वसाम्यं । अपीतिशब्दोक्तलयकर्तृत्वसाम्यं च स्फुटं स्यादेवेति । अत्र विश्वादीनामकारत्वाद्युपासनायामनंतरं मात्रासंप्रतिपत्तौ च अकाराद्योंकारपादप्रतिपाद्यं विश्वाद्यैक्यप्राप्तौ मत्यां आदिमत्वादिसममेव भवतीत्यन्यथाप्रतीतेः व्याचष्टे ।। **मात्रासंप्रतिपत्ताविति** ।। अंशाविश्वादयः । आदिसामान्यमादित्वसामान्यमित्यन्यथाप्रतीतेः व्याचष्टे ।। **आदिमत्त्वमिति** ।। विश्वादीनामकारवाच्यत्वाद्युपासनायामादिसामान्यदिकं भवति । मात्रासंप्रतिपत्तौ त्वाप्तिसामान्यादिकमेव भवतीति उपासनाद्वयस्य विभज्यफलमुच्यत इत्यन्यथाप्रतीतिवारणाय मात्रासंप्रतिपत्ताविल्येतद्व्याख्यानानंतरं आदिसामान्यमित्येतद्व्याख्यानं । तथा चात्वविवक्षायां मात्रासंप्रतिपत्तौ चादिसामान्यमाप्तिसामान्यं चेति योजना सूचितेति ज्ञेयम् ।

## पदार्थदीपिका

अत्रापि सलिलेश्वरः स्वोक्तार्थे संवादितया ब्रह्मदृष्टान्मंत्रानुदाहरति ।। **अत्रैत इत्यादिना** ।। तत्र मात्रा संप्रतिपत्तावित्यस्याप्रतीतेरर्थमाह ।। **मात्रासंप्रतिपत्तावंशध्यान इति** । आदिसामान्यमुत्कटमित्येतदप्रतीतेः व्याकरोति ।। **आदिमत्त्वमिति** ।। सुप्तेरुत्थाने प्राज्ञरूपादिमत्त्वस्वप्नादुत्थाने तैजसरूपादिमत्त्वं विश्वस्यास्ति । तदादिमत्त्वं । उपासकस्य विश्वोपासकस्यापि भवतीति सुक्त्यर्थं विश्वरूपादिमत्त्वमस्तीत्येवमादिसामान्यं । आदिमत्त्वेन विश्वतदुपासकयोः साम्यं शब्दतो दृष्टव्यमित्यर्थः ।

## उपनिषत्

तैजसस्योत्वविज्ञान उत्कर्षो विद्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ।।

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ।।

त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितम् ।
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ।।

अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिरिति ।।

।। इति तृतीयः खण्डः ।।

## भाष्यम्

अमात्रेऽप्यगतिर्न विद्यते । प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम् । तुरीयस्य तन्न विद्यत इत्यमात्रः । विश्वादीनां व्यवहारकारणत्वं विद्यते । तुरीयस्य तन्न विद्यत इत्यतो गम्यत्वमपि नास्तीत्याशङ्कां निवारयति अगतिर्न विद्यत इति । आत्मानं संविशतीति गतिवचनात् ।

'आदिमत्त्वेन सामान्यमुपास्येन भवेदिति ।
उपासकस्य सञ्जानन् सर्ववन्द्यो भवेत् पुमान् ।।

सामान्यत्रयमप्येतत् तुल्यं मुक्तिगतत्वतः ।
अमात्रत्वं तुरीयस्य त्वविभागाद्दिने दिने ।
जाग्रदादेरकर्ताऽपि गम्योऽसौ ज्ञानिनां भवेत् ।।' इतिच ।

"आदिमत्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः ।
अमात्रत्वं तुरीयस्याप्यविभागाद्दिने दिनं ।।"

इत्यात्मसंहितायाम् ।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - मकारभावे मकारवाच्यत्वभावानायां । यदकाराद्यभिधेयविश्वाद्युपासकानां सर्वकामावाप्त्यादिकं तत्तथैव । तथैवेति वक्तुरपि

फलोक्तिरित्याशयवांस्तत्र मंत्रं पठति ।। **त्रिष्विति** ।। त्रिषुधामासु त्रिपुरूपेषु पूजितेषु पूजकस्य यत्तुल्यमविकारित्वेन साम्यं फलं योवेत्ति स सर्वलोकानां पूज्य इत्यादि योज्यं ।

विश्वाद्युपासकानामभीष्टकामावाप्तिः फलमुक्तं सांप्रतं तत्प्राप्तिंच फलमाह ।। **अकार इत्यादिना** ।। अकरोऽकारवाच्यो विश्वो विश्वं स्वं प्रत्युपासकं नयत इत्यादि योजना द्रष्टव्या । तुरीयोपासकस्यतु कथमित्यतस्तस्यापि तत्प्राप्तिरस्तीत्याह ।। **नामात्र इति** ।।

**इति श्रीमांडूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां**

**।। खंडार्थे तृतीयः खंडः ।।**

**भाष्यार्थः** - अमात्रे गतिर्नविद्यत इति प्रतीतिं निवारयंस्तव्द्याचष्टे ।। **अमात्रइति** ।। तुरीयस्यामात्रत्वं नाम किमित्यतस्तदाह ।। **प्रतिदिवसमिति** ।। नामात्रे विद्यते गतिरित्येतदप्रतीतेर्व्याख्याय तन्निवर्त्यामाशंकां दर्शयन्नवतारयति ।। **विश्वादीनामिति** ।। व्यवहारकारणत्वाद्गम्यत्वंच विद्यत इति दोपतया ग्राह्यं । तुरीयस्य गम्यत्वं कुतः सिद्धं येन तदाशंकानिवर्तकं तत्प्रतीम इत्यत आह ।। **आत्मानमिति** ।। त्रिषु धामस्वित्युक्तं फलमुपासकस्येति प्रतीतिं निवारयन् तव्द्याचष्टे ।। **आदिमत्त्वेनेति** ।। सामान्यंतु तुल्यमित्यन्यथाप्रतीतिमपेक्षितपूरणेन वारयन्नाह ।। **सामान्यत्रयमिति** ।। आप्नोति ह वै सर्वान्कामानादिश्च भवति । उत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति । मिनोति हवा सर्वमपीतिश्च भवतीत्युक्तं सामान्यत्रयं मुक्तिगतत्वतस्तुल्यमविकारत इत्यर्थः । प्रतिवासरमविभागादमात्रस्तुरीयो गम्यश्चेत्युक्तमर्थं प्रमाणेन द्रढयति ।। **अमात्रत्वमिति** ।। आदिमत्त्वादिसामान्यं तुल्यमित्यत्राविभागादमात्रत्वमित्यत्रच प्रमाणांतरं पठति ।। **आदीति** ।।

इति श्रीमाडूकभाष्यटीकायां व्यासतीर्थमुनिविरचीतायां

।। भाष्यार्थे तृतीयः खंडः ।।

## प्रकाशिका

विश्वादीनां प्रतिदिनमन्योन्यप्राप्त्या मात्रासम्बन्धवत्त्वात् समात्रत्वम्, तुरीयस्य तु तदभावादमात्रत्वमिति भावेनोक्तम् **तुरीयस्य तत्र विद्यत इति**। न विद्यते अन्या मात्रा यस्य सः अमात्रः । विश्वादीनां व्यवहारकारणत्वं जीवस्यापेक्षितावस्थात्रयाख्यव्यवहारकारणत्वं विद्यते । तेन तस्यां तस्यामवस्थायां जीवेन गम्यत्वमप्यस्ति । तुरीयस्य तद्व्यवहारकारणत्वं नास्तीत्यतो गम्यत्वं जीवगम्यत्वमपि नास्तीत्याशङ्केति भावः । अमात्रे तुरीये अगतिर्नास्ति । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेन मुक्तगम्यत्वरूपातिशयिता गतिरेवास्तीत्यतस्तुरीयस्य गम्यत्वं नास्तीति शङ्का न कार्येत्युत्तरवाक्यार्थः ।

'आत्मानं संविशति' इत्यनेन 'आत्मैव संविशत्यात्मनाऽऽत्मानम्' इति वाक्यं सङ्गृह्णाति । अस्यार्थः - य एवं तुरीयमहिमानं वेद स उपासकः आत्मैव केवलं जीव एव, न तु संसारिवत् पाञ्चभौतिकदेहाद्युपाधिविशिष्ट इति । आत्मना मुक्तिप्रापकतुरीयाख्यपरमात्मकृपयाऽऽत्मानं मुक्तस्थाने स्थितं तं तुरीयमेव संविशति । न चात्मानमित्यनेन तुरीयस्यासङ्ग्रह इति वाच्यम् । तत्स्वरूपवेत्तुः तत्प्रवेशस्यैव फलतया वक्तव्यत्वात् । आत्मानं स्वात्मानमेव संविशतीत्यर्थस्त्वेकस्मिन् कर्तृकर्मविरोधान्न परेण वक्तुं शक्यः । तुरीयोपासनया स्वप्राप्तेरसङ्गतत्वात्, अफलत्वाच्च । वक्ष्यति चैतद्भाष्यकारः - आत्मैव भूत्वेत्यादिना। त्रिषु धामसु विश्वादीनामुपासकस्य "आप्नोति ह वै सर्वान् कामान्", "उत्कर्षति हवै ज्ञानसन्ततिम्" इति "मिनोति हवा इदं सर्वम्" इति च यत्सामान्यमुपास्य दैवैः सह यत्साम्यमुक्तमेतत् त्रितयमपि तुल्यं मुक्तिगतत्वेन समम् । त्रितयं च कदाऽप्युच्छेदरहितत्वेन सममित्यर्थः । मोक्षोपभोग्यतः मोक्षोपभोग्याव्यवहार्यत्वादिकं यत्तुरीय उक्तं तस्याप्यत्रोपासके साम्यमिति भावः ।

।। इति तृतीयः खण्डः ।।

## भाष्यविवृतिः

मात्रासम्प्रतिपत्तौ अंशध्याने तैजसस्य उत्वविज्ञने उत्कर्षः स्फुटं विद्यते । तथा मात्रासम्प्रतिपत्तौ उभयत्वं विद्यत तदुभयत्वं समानं स्नेहदोषाभावाभ्यां अयमधिकारी मुक्तेषु समानो भवति ।

मकारभावे मकारवाच्यलयभावनायां उत्कटं मानसामान्यं भाति । उपासकस्य मानसामान्यं लयसामान्यंच भवति ।

त्रिषु धामसु त्रिषु स्वरूपेषु । नामात्रे विद्यतेऽगतिः । अमात्रेऽप्यगतिर्न-विद्यते । विश्वादीनां प्रतिदिवसं विभाग एकीभावश्च विद्यते । तुरीयस्य तु तन्न विद्यत इति मात्रासालक्षण्याभावादमात्रः । नन्वेवं मात्रासालक्षण्यपरिहीने कथमगतिशङ्का ? विश्वादीनां सांसारिकव्यवहारकारणत्वं विद्यते तुरीयस्य तन्न विद्यते इति गम्यत्वमपि नास्तीति शङ्का स्यात् । तन्निवर्तनाय अगतिर्नविद्यत इति वक्तव्यम् । किमत्र कल्पकम् आत्मानं संविशतीति गतिवचनम् । तदिदमभाषिष्ट भाष्य अधिकं सर्वतोऽविनाशिचेत्यध्यक्षरमि-त्यादिना अमात्रत्वं तुरीयस्य "त्वविभागाद् दिनेदिने" इत्यात्मसंहितायां-मित्यन्तेन ।

**।। इति द्वितियाध्याये प्रथमः (तृतीयः) खण्डः ।।**

## भाष्यार्थरत्नावलिः

विश्वादित्रिरूपोपासकानां अभीष्टावाप्त्यादिकं फलमुक्तं । तत्कैमुत्यन्या-येनोपपाद्यते ।। **त्रिष्विति** ।। त्रिषुधामसु भगवत्स्वरूपेषु विश्वादिषूपासितेषु सत्सूपासकस्योपास्यत्रयेण सामान्यं श्लोकत्रयोक्तं। फलसाम्यं निश्चितं स्फुटं यो वेद समहामुनिरेवमुपासक एव सर्वभूतानां पूज्यो वंद्यश्च भवति । किमु वाच्यं रूपत्रयोपासकानामुक्तं फलं भवतीत्यर्थः । उपासकत्रयस्य उपास्यत्रयेण श्लोकोक्तं फलसाम्यं किं कस्यचित्संसारे लभ्यं कस्यचिन्मुक्तौ लभ्यमिति विषममुत एकत्रैव लभ्यमिति तुल्यमित्यतः उक्तं।। **तुल्यमिति**।। सर्वेषां मुक्तौ लभ्यतया तुल्यमित्यर्थः । यद्वा सामान्यादित्रयं किं कदाचित् विक्रियत इति शङ्कायामुक्तं ।। **तुल्यमविकारीति** ।। मुक्तगत्वादिति भावः ।

उत्तरोक्त्या परिहरति ।। **प्रतिदिवसमिति** ।। विश्वादीनां परस्परं प्रतिदिवसं विभागः विश्लेपः संश्लेपः एकीभावश्च विद्यते । तुरीयस्य तन्न विद्यत इति । प्रतिदिनं विश्लेपसंश्लेपयुक्तांशत्वाभावविवक्षया अमात्रत्वोक्तिर्नतु भगवदंशत्वाभावविवक्षया । नापि मुक्तिगम्यांशवैलक्षण्य विवक्षयेत्यर्थः ।

ननु रूपत्रये गम्यत्वस्य प्रसक्तत्वेन तुरीये गतिर्नेति निपेधो युक्तः । अगतेरप्रसक्तत्वात्तन्निपेधो युक्त इत्यतः प्रसञ्जकोक्त्या तद्घटयति ।। **विश्वादीनामिति** ।। अदृष्टमव्यवहार्यमित्यत्र विश्वादीनां व्यवहारकारणत्वं विद्यते तुरीयस्य तन्न विद्यत इत्युक्ते व्यवहारे गतेरंतर्भावशङ्कया न्याय साम्येन वा गम्यत्वमपि नास्तीत्याशङ्का प्रसक्तामगतिर्न विद्यत इत्यनेन प्रतिपेधतीत्यर्थः । नन्वस्मिन्नेव श्लोकेऽन्यत्र विश्वादौ मुखतः प्रसक्तन्यायसाम्येनात्र प्राप्ता गतिर्निषिध्यत इति व्याख्याने बाधकाभावात् । किं दूरस्थप्राप्ताहितशङ्का निपिध्यत इति व्याख्यानेनेत्यतो बाधकमाह ।। **आत्मानमिति** ।। आत्मा विश्वादयः स्वोपासकानामभीष्टावाप्त्यादिहेतव इत्युक्तं । सांप्रतं फलानां मुक्तिगतत्वात्तौल्यप्रकटनाय ते स्वप्राप्तिहेतवश्चेत्युच्यते ।। **अकार इति** ।। अ इत्यनेन वर्णनाक्रियमाणः प्रतिपाद्यो विश्व उपासकं विश्वं स्वात्मानमेव नयते । नतु रूपान्तरं देवतान्तरं वा "मद्भक्ता यान्ति मामपि"इत्यादेः । उकारस्तैजसोऽप्युपासकं स्वात्मानं प्रत्येव नयते । चशब्दोऽवधारणे । पुनश्शब्दः समुच्चये । मकारः प्राज्ञोऽप्युपासकं प्राज्ञं स्वात्मानमेव प्रतिनयत इत्यर्थः । अमात्रश्चतुर्थ इति वक्ष्यमाणत्वादमात्रे तुरीये उपासकानां मुक्तौ गतिःप्राप्तिर्न विद्यत इत्यन्यथाप्रतीतेश्चतुर्थपादं व्याचष्टे ।। **अमात्रेपीति** ।। अपिरनुवर्तते । अगतिरिति पदविच्छेदः । अमात्रे तुरीये उपासकानामगतिरप्राप्तिर्नेति भावः ।

ननु तुरीयस्यामात्रत्वं नाम विश्वादिलक्षणमुक्तगम्यमात्रातो वैलक्षण्यमेवांगीकार्यं नत्वनंशत्वं । सोऽयमात्मा चतुष्पात् पादामात्रा इत्युपक्रम विरोधात्तथाच गतिरित्येवपदविभागो युक्त इत्यतोऽथात्मानं संविशतीत्यनुपदमेवोपासकस्य तुरीयगतिवचनात् गतिर्नेति व्याख्यानं बाधितमिति भावः। त्रिपु धामस्विति श्लोके त्रिपुरूपेपु तुल्यमीपदपि व्यत्यासरहितं साम्यं

योवेदेति रूपत्रये साम्यवेत्तुः फलमुच्यत इति प्रतीयते । तत्प्रकृतानुपयुक्तं । उपास्येनोपासकस्य साम्यमेवादिसामान्यमित्यादौ प्रकृतत्वादित्यत उपास्येनोपासकस्य मुक्तौ फलसाम्यवेत्तुरत्र फलमुच्यत इति व्याचष्टे ।। **आदिमत्वेनेति** ।। आदिमत्वादिनेत्यर्थः उपास्येन रूपत्रयेणोपासकस्यादिमत्वादिसामान्यं योवेदेत्यन्वयः । उपासकानां वाक्यत्रयोक्तमुपास्येन फलसाम्यं तुल्यमित्युक्तं किं संसारोपभोग्यत्वेन फलत्रयस्य साम्यमित्यत आह ।। **सामान्येति** ।। मुक्तिगतत्वतः मुक्तावुपभोग्यत्वतः । अमात्रपदस्य प्रतिदिवसमित्युक्तार्थे प्रमाणममात्रत्वं इति । अगतिर्नविद्यत इत्यगतिनिषेधाय गतिप्रसंजकमुक्तं । तत्र प्रमाणं जागृदादेरिति । अव्यवहार्यमिति विश्वादिवद्जाग्रदादिव्यवहारस्याकर्ता तुरीय इत्युक्तं । तर्हि तद्वदगम्योऽपि किं नभवतीत्यतो "जाग्रदादेरकर्तापि गम्योऽसौ ज्ञानिनां भवेत्" इत्यगतिर्नेत्युच्यत इति भावः। किं तत्सामान्यत्रयं । किंच तेषां मुक्तिगतत्वं इत्याशंकां परिहरन् तुरीयस्य प्रतिदिनमेकीभावो नास्ति तस्मादप्यमात्रत्वमित्युक्तार्थे प्रमाणमाह ।। **आदिमत्वादिति** ।। अप्यविभागादित्यपि शब्देनैकीभावाच्चेति समुच्चिनोति ।

**।। इति तृतीयः खण्डः ।।**

## पदार्थदीपिका

नामात्र इति वाक्यं अमात्रेति गतिर्नविद्यते इत्यन्यथाप्रतीतिवारणायाकारप्रश्लेषेण पदच्छेदं दर्शयन्व्याख्याति ।। **अमात्रेपीति** ।। कर्मणि क्तिन् । भावप्रधाननिर्देशः । तथाच यथा विश्वादिरूपत्रयेऽगतिरगम्यता नविद्यते । तथाऽमात्रे तुरीयेप्यगतिर्नविद्यते । सोपि ज्ञानिप्राप्य एवेत्यर्थः । तुरीयस्य कथममात्रत्वमित्यत आह ।। **प्रतिदिवसमिति** ।। तदिति सामान्येन विभागैकीभावयोःपरामर्शः । यथा विश्वादीनां मध्ये विश्वतैजसयोः प्राज्ञेनैकीभावविभागौ विद्येते यथा विश्वस्य प्राज्ञतैजसाभ्यां । तथा तुरीयस्य तौ न स्त इत्यमात्र उच्यत इत्यर्थः । अस्त्वेवं नामात्र इति वाक्यव्याख्यानं । तथापि किमर्थमेतद्वाक्यं प्रवृत्तमित्यतस्तदवतारयति ।। **विश्वादीनामित्यादिना** ।। व्यवहारःप्रवृत्तिः ।। **इत्यत इति** ।। इत्येतस्माद्धेतोरित्यर्थः । तथाच विश्वादीनां जाग्रदादिनां जाग्रदादिप्रवृत्तिरूपव्यवहारकारणत्वं विद्यते।

तत एतत्प्रयुक्तं तत्तदवस्थायां जीवेन साम्यं चास्ति । तुरीयस्य तु गम्यत्वप्रयोजकस्य जाग्रदादिप्रवृत्तिरूपव्यवहारकारणस्याभावात्तत्प्रयुक्तं गम्यत्वमपि नास्तीत्याशंकां अनेन वाक्येन निवर्तयतीत्यर्थः ।। **अगतिर्न विद्यत इतीति** ।। तथाच जाग्रदादिप्रवृत्तेरकर्तापि तुरीयो गम्य इत्यंगीकारान्न तस्यागम्यत्वप्रयोजकत्वमिति भावः ।

ननु भवेदेतद्वाक्यस्योक्तरीत्याऽकारप्रश्लेपेण व्याख्यानं तुरीयस्यागम्यत्वशंकानिवर्तकं यद्यकारो नयते विश्वमित्यादिवत्तुरीयस्यापि गम्यत्वप्रतिपादकं निरवकाशं किंचिद्वाक्यं स्यात्तदेव नास्तीति चेत् तत्राह ।। **आत्मानमिति** ।। गतिवचनात् गम्यत्ववचनादित्यर्थः । तथाचात्मानं संविशतीति तुरीयप्रकरणे आत्मशव्दोक्तस्य तुरीयस्य संविशतीति स्पष्टं गम्यत्वोक्तेः। तदनुसारेणेदमपि वाक्यमकारप्रश्लेषेण व्याख्यातं तदुक्तशंकानिवर्तकं भविष्यत्येवेति भावः । त्रिषु धामस्विति वाक्यं प्रमाणेनैव व्याचष्टे ।। **आदिमत्वेनेति** ।। उपासकस्यादिमत्वेन निमित्तेनाकारादिवाच्यतया विश्वाद्युपासकस्योपास्येन विश्वादिनाऽऽदिमत्त्वेन सामान्यं भवेदिति संजानन्पुमान्सर्ववंद्यो भवेदित्यर्थः। सामान्यं तुल्यमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव विवृणोति।। **सामान्यत्रयमपीति** ।। आप्नोति ह वै सर्वान्कामानादिश्च भवतीत्यनेनोक्तं आदिसामान्यमाप्तिसामान्यमित्येकं । उत्कर्षति हवै ज्ञानसंततिं समानश्च भवतीति वाक्येनोक्तं उत्कर्ष- सामान्यमुभयसामान्यमित्यपरं । मिनोति हवा इदं सर्वमपीतिश्च भवतीत्यनेनोक्तं मानसामान्यलयसामान्यमित्यन्यदित्येवं सामान्यत्रयमपि तुल्यं एकप्रकारतयाऽविकारीत्यर्थः । कुत इत्यत उक्तं ।। **मुक्तिगतत्वत इति** ।। नहि मुक्तिगतं विकारीति भावः । प्रतिदिवसमेकीभावविभागयोरभावात्तुरीयोऽमात्रो ज्ञानगम्यश्चेत्येतत्प्रमाणशेषेण द्रढयति ।। **अमात्रत्वमिति** ।। जाग्रदादिप्रवृत्तिकारणत्वं गम्यत्वप्रयोजकं नभवतीत्येतदपि प्रमापयति ।। **जाग्रदादेरिति** ।। आदिमत्त्वादिसामान्यं मुक्तिगतत्वतस्तुल्यमित्यत्र तुरीयस्योक्तरीत्याऽमात्रत्वे च प्रमाणांतरं पठति ।। **आदिमत्त्वादीति** ।। ।। **मोक्षोपभोग्यत इति** ।। मोक्षोपभोग्यत्वतः मोक्षपर्यवसायित्वादिति यावदित्यर्थः ।

।। इति माण्डूकभाष्यार्थे तृतीयः खंडः ।।

**ततश्चायं खंडार्थः** - एवं चतुरो विश्वादीन्निरूप्य तेषामेव चतुर्णां प्रणवांशाकारोकारमकारनादप्रतिपाद्यत्वरूपमहिमानमाहोत्तरखंडद्वयेन । तत्रादौ विश्वादीनां त्रयाणां प्रणवांशाकारोकारमकारत्रयप्रतिपाद्यत्वं वक्तुं उक्तमनुवदति ।। **सोयमात्मेति**।। सोयं विश्वादिचतूरूप आत्मा अध्यक्षरं सर्वतोधिकत्वादधि अविनाशित्वादक्षरमोमित्याक्रियत इत्योंकारः । यद्वक्तुमुक्तमनूदितं तन्निरूपयितुं प्रस्तावयति।। **अधिमात्रमिति** ।। अधि अधिकाः पूर्णाः मात्राः यस्यासावधिमत्राः । कास्ता मात्रा इत्यत आह ।। **पादा मात्राइति** ।। पादाः अंशाः मात्रा मात्राशब्दवाच्या इत्यर्थः। ते पादा अपि क इत्यत आह ।। **अकारइत्यादिना** ।। अत्र नादोपि ग्राह्यः । तत्राकारवाच्यः क इत्यत आह ।। **जागरितेति** ।। यो जागरितस्थानो वैश्वानरो भगवतः प्रथमामात्रा प्रथमोंशो विश्वः स अकारः अकारवाच्यः । विश्वे अकारप्रवृत्तौ निमित्तद्वयमाह ।। **आप्तेरादिमत्त्वाद्वेति** ।। आप्तेर्जीवस्य विषयानापयति प्रापयतीत्याप्तिस्तन्निमित्तात् । आदिमत्त्वाद्वा सुप्त्यवस्थातो जाग्रदवस्थायां प्रत्यागमने विश्वस्य प्राज्ञाद्विभज्यमानत्वेन प्राज्ञरूपादिमत्त्वं । स्वप्नादुत्थाने तैजसाद्विभज्यमानत्वेन तैजसरूपादिमत्त्वमस्तीत्येवं आदिमत्त्वाद्वा अ इत्युच्यत इत्यर्थः । आप्त्यादिमत्त्वरूपनिमित्तद्वयेनाकारवाच्यतया विश्ववेत्तुः फलमाह ।। **आप्नोतीति** ।। य एवं निमित्तद्वयेन विश्वस्याकारवाच्यत्वं वेद स सर्वान्कामान्काम्यान् विषयान्विश्वानुग्रहेण प्राप्नोति मुक्तौ ।। अस्योपासकस्य भगवान्विश्व आदिश्च मुक्तेः कारणंच भवतीत्यर्थः ।। १ ।।

उकारवाच्यः क इत्यत आह ।। **स्वप्नस्थानइति** ।। यःस्वप्नस्थानस्तैजसो द्वितीया मात्रा स उकारः उकारवाच्य इति । तत्र उकारशब्दप्रवृत्तौ निमित्तद्वयमाह ।। **उत्कर्षादुभयत्वाद्वेति** ।। शरीराभिमानादुत्थाप्योद्धृत्य स्वप्नमंडलं प्रति वासनामयपदार्थानुभवाय कर्षतीत्युत्कर्षस्तस्मात् ।। बाह्यव्यापारोपरतिरूपनिद्रायाः स्वाप्नविषयानुभवस्य च हेतुत्वादुभयत्वं तस्माद्वा उकारवाच्य इत्यर्थः । एवं निमित्तद्वयेन तैजसस्योकारवाच्यत्ववेत्तुः फलमाह ।। **उत्कर्षतीत्यादिना** ।। एवं निमित्तद्वयेन तैजसस्योकारवाच्यत्वं यो वेद स ज्ञानसंततिमुत्कर्षति ज्ञानसंतत्योत्कृष्टो भवति । मुक्तिं प्राप्य नित्य-

ज्ञानो भवतीति हवै प्रसिद्धमित्यर्थः । समानश्च भवति स्नेहाद्यभावाच्च सर्वमुक्तानां मध्यस्थो भवति । अस्यैवं उकारवाच्यतया तैजसवेत्तुः कुलेऽब्रह्मवित्पुत्रो न भवति ज्ञानिपुत्रको भवतीत्यर्थः ।। २ ।।

मकारवाच्यः क इत्यत आह ।। **सुषुप्तस्थान इति** ।। यः सुषुप्तस्थानः प्राज्ञो भगवतस्तृतीया मात्रा स मकारो मकारवाच्य इति । प्राज्ञे मकारप्रवृत्तौ निमित्तद्वयमाह ।। **मितेरपीतेर्वेति** ।। मितिरंतर्गतिः तथाच सुप्तौ जीवमात्मन्यंतर्गमयतीति हेतोः । तथाऽपीतेः सुप्तौ बाह्यज्ञानलयकर्तृत्वाद्वा मकारवाच्य इत्यर्थः । "मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यत"इति वचनात् । एवं निमित्तद्वयेन प्राज्ञस्य मकारवाच्यत्ववेत्तुः फलमाह ।। **मिनोति हवा इत्यादिना** ।। एवं निमित्तद्वयेन प्राज्ञस्य मकारवाच्यत्वं यो वेद स इदं सर्वं जगन्मिनोति । अत्यणूनामपि जीवानां प्रकाशतो व्याप्तेः सत्त्वात्प्रकाशस्यांतर्गमयति । अंडमात्रस्थितं पदार्थजातं जानातीति यावत् । अपीतिर्दुःखादेः संसारस्य विलापकश्च भवतीत्यर्थः ।। ३ ।।

जागरितस्थानइत्यादिनोक्तार्थे विश्वासजननाय सलिलेश्वरो ब्रह्मदृष्टान्मंत्रान्संवादयन्नाह ।। **अत्रैतइति** ।। तत्र जागरितस्थान इत्याद्यर्थे मंत्रं पठति ।। **विश्वस्येति** ।। विश्व अकारवाच्य इत्येवं विश्वस्य अत्वविवक्षां उक्तरीत्या अकारवाच्यत्वविवक्षां कृत्वेति यावत् । मात्रासंप्रतिपत्तौ मात्रायाः विश्वलक्षणभगवदंशस्य संप्रतिपत्तौ ध्याने क्रियमाणे सति । अस्य ध्यातुरुत्कटं विस्पष्टं यथा भवति तथाऽऽदिसामान्यं उक्तरीत्या विश्वस्य प्राज्ञतैजसरूपादिमत्त्वं विद्यते । तदुपासकस्यापि भवतीत्येवमादिमत्त्वेन साम्यं भवति । शब्दसाम्यमेवात्र द्रष्टव्यं । तथाऽऽप्तिसामान्यं । उक्तरीत्याऽऽप्तिमत्त्वेनापि साम्यं स्यात् भवतीत्यर्थः ।। ४ ।।

स्वप्नस्थान इत्याद्यर्थे मंत्रं पठति ।। **तैजसस्येति** ।। तैजसस्योकारवाच्यत्वविज्ञाने उक्तरीत्या उकारवाच्यत्वविवक्षां कृत्वा मात्रासंप्रतिपत्तौ तैजसलक्षणभगवदंशध्याने अस्योपासकस्य स्फुटमुत्कर्षः ज्ञानोत्कर्षरूपं फलं विद्यते । तथाविधं भगवन्निष्ठोभयत्वसदृशं उभयत्वंच विद्यते । निद्रास्वाप्नविषयानुभवश्च भगवता क्रियत इति तस्योभयत्वं । अस्याप्युपासकस्य

बाह्येंद्रियोपरमरूपा निद्रा मुक्तौ भवति । बाह्येंद्रियाणि जडानि सर्वाण्यपि नश्यंतीति यावत् । स्वरूपेंद्रियेण विषयानुभवश्च भवतीत्युभयत्वं विद्यते भवतीत्यर्थः ।। ५ ।।

सुपुप्तस्थान इत्याद्यर्थे मंत्रं पठति ।। **मकारेति** ।। प्राज्ञस्य मकारभावे मकारवाच्यत्वे उक्तरीत्या मकारवाच्यत्वविवक्षां कृत्वा मात्रासंप्रतिपत्तौ प्राज्ञरूपभगवदंशध्यानेऽस्योत्कटं मानसामान्यं उक्तरीत्या स्वांतर्गमयितृत्वेन साम्यं उक्तरीत्या लयकर्तृत्वेन साम्यं च भवतीत्यर्थः ।। ६ ।।

यत अकाराद्यभिधेयविश्वाद्युपासकानां सर्वकामावाप्त्यादिफलमुक्तं तत्सत्यमेव । कुत इति चेत् अकाराद्यभिधेयविश्वाद्युपासकाः सर्वकामाप्त्यादिमंत इति वेत्तुरपि फलोक्तेः । नहि तस्य मिथ्यात्वे तद्वेत्तुः फलं भविष्यतीत्याशयेनाह ।। **त्रिष्विति** ।। यो निश्चितो निश्चयरूपज्ञानवानधिकारी। त्रिषु धामसु "तेजःस्वरूपं च गृहं प्राज्ञैर्धामेति गीयत"इतिवचनात् विश्वादिस्वरूपेषु अकारादिवाच्यतयोपासकेनोपासितेषु सत्सूपजायमानं यदुपासकस्योपास्येन आप्त्यादिमत्त्वरूपं सामान्यं साम्यं तत्तुल्यं मोक्षपर्यवसायित्वादविकारीति वेत्ति। स सर्वभावानां कर्तरिषष्ठी। सर्वभवैः सर्वजीवैः पूज्यो वंद्यश्च भवति । महामुनिश्च भवतीत्यर्थः ।। ७ ।।

विश्वाद्युपासकानां सर्वकामावाप्त्यादिफलमित्युक्तं । तत्प्राप्तिरूपफलांतरं चास्तीत्याह ।। **अकारइत्यादिना** ।। अकारः अकारवाच्यो विश्वः तथाध्यातः विश्वं स्वं प्रति उपासकं नयतीत्यर्थः । एवमुत्तरत्रापि व्याख्येयं। विश्वादीनां जाग्रदादिप्रवर्तकत्वेन तत्तदवस्थायां जीवेन गम्यत्ववत्तुरीयस्य तदभावात् तत्प्रयुक्तं गम्यत्वमपि नास्तीत्याशंकां परिहरति।। **नामात्रइति**।।

विश्वादिवत्प्रत्यहमेकीभावविभागयोरभावेनामात्रो यस्तुरीयस्तस्मिन्नगतिः कर्मणि क्तिन् भावप्रधानश्च निर्देशः अगम्यता नास्तीति सोपि ज्ञानिप्राप्य एव । आत्मानं संविशतीति तस्यापि गम्यत्ववचनादित्यर्थः तथाच न जाग्रदादि प्रवृत्तिकारणत्वं गम्यत्वे प्रयोजकमिति भावः ।। ८ ।।

**।। इति मांडूकखंडार्थे तृतीयः खंडः ।।**

## अथ चतुर्थः खंडः

### उपनिषत्

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ओङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद ।।**

### भाष्यम्

**आत्मैव भूत्वाऽन्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः । अव्यवहार्यत्वादिकमत्र साम्यमिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम् ।**

**"तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम् ।**
**तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान् ।।**

**ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः क्वचित् ।**
**विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा ।।**

### श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - तुरीयस्य नांतःप्रज्ञमित्याद्युक्तं तदनुवादेनावधारयन् नादप्रतिपाद्यत्वमाह ।। **अमात्र इति** ।। ओंकारः प्रणवैकदेशनादप्रतिपाद्य इत्यर्थः । नादप्रतिपाद्यत्वेन तुरीयोपासकस्य फलमाह ।। **आत्मेति** ।।

**भाष्यार्थः** - आत्मैव संविशतीत्यादिवाक्यमप्रतीतेर्व्याचष्टे ।। **आत्मैवेति** ।। अदृष्टमव्यवहार्यमित्यादिना पूर्वमेवाव्यवहार्यत्वादेरुक्तत्वात् पुनश्चतुर्थोऽव्यवहार्य इत्याद्युक्तिर्व्यर्थेति शंकां प्रयोजनोक्त्या परिहरति ।। **अव्यवहार्यत्वादिकमिति** ।। अत्रोपासके अद्वैत ओंकार इत्यत्र तुरीयस्य समग्रप्रणवप्रतिपाद्यत्वप्रतीतिं निवारयंस्तदुपासकस्यात्मैव संविशत्यात्मनाऽऽत्मानमित्युक्तं तत्प्रवेशं प्रमाणेन द्रढयति ।। **तुरीयमिति** ।। तत्सदृशात्मवानित्युक्तं तत्सादृश्यं सर्वप्रकारेणेति प्रतीतिं निवारयन्नाह ।। **ज्ञानेति** ।।

### प्रकाशिका

य एवं वेद सोऽपि सांसारिकव्यवहारागोचरः सन्देहाभिमाननिमित्तकप्रपञ्चोपशमवान् शिवः शोभनः अद्वैतः भ्रमरहितश्च सन्नित्येतावानर्थः य

एवं वदत्युक्तिवलाल्लभ्यते । अतः पुनरारभ्य इत्यर्थः । पूर्वं तूपासकस्या-प्रस्तावात्तुरीयस्यैव महिमेति सिध्यति । अत्र तूपासकफलप्रस्तावादुपास्यगत-मव्यवहार्यत्वादिकमपि स्वयोग्यं फलं वलादायाति । "तं यथा यथोपासते तथैव भवति" इति हि श्रुतिः । तदिदमाह पुराणकारः "तत्सदृशात्मवान्" इति. "ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः क्वचित्"इति च ।

## भाष्यविवृतिः

तुरीयस्यः नातःप्रज्ञमित्याद्युक्तमनुवादेनावधारयन् नादप्रतिपाद्यत्वमाह ।। **अमात्र इति** ।। ओंकारः ओंकारावयवनादप्रतिपाद्यः इदंचामात्रत्वोंकार-त्वोक्तिसामर्थ्याल्लभ्यते । अमात्र इति वहुव्रीहिः । ततश्च अमात्र इति अविद्यमानमात्रत्वमाह । ओंकार इत्योमित्यभिधेयत्वं च । एवं च ओमित्याक्रियमाणत्वं नादप्रतिपाद्यत्वेन । न च घोषप्रतिपाद्यत्वम् । संनिहितपरित्यागे कारणाभावात् । अव्यवहार्यत्वादिकं अत्र तुरीये मुक्तेन साम्यमिति दर्शयितुं पुनरव्यवहार्यत्वाद्यभिधानम् । अन्यथापुनरुक्तेः । आत्मैव संविशत्यात्मनाऽऽत्मानं यं आत्मानं संविशति तदात्मा भूत्वेति नार्थः । किन्तु आत्मैव भूत्वा देहाद्यभिमानं त्यक्त्वा आत्मनैव परमात्म-प्रसादेनैव परमात्मानं प्रविशत्युपासक इत्यर्थः ।

## भाष्यार्थरत्नावलिः

नामात्र विद्यते गतिरित्युक्तो मात्रः क इत्यतः तत्स्वरूपनिरूपणपूर्वमुक्ता-नुवादेन तुरीयस्य नादप्रतिपाद्यत्वमुच्यते ।। **अमात्रइति** ।। अव्यवहार्यो जाग्रदादिप्रवर्त्यहेतुत्वादसंव्यवहार्यः । निर्दुःखसुखरूपत्वाच्छिवः अन्यथा ज्ञानाविषयत्वात्तदकारणत्वात् तन्नाशकत्वाद्वा अद्वैतः । विस्तृतत्वात् उत्कृष्टानन्दरूपत्वात् प्रपञ्चोपशमः । देहवंधनाशकत्वाद्वा प्रपञ्चोपशमः मुक्त्यवस्थानियामक इति यावत् । प्रतिदिवसं संश्लेपविश्लेपाभावेन विश्वादिमात्राविलक्षणः चतुर्थः चतुर्थमात्रा तुर्यः । ओंकारः । ओंकारैकदेश नादप्रतिपाद्यइत्यर्थः । एवं तुर्योपासकस्य फलमुच्यते ।। **आत्मैवेति** ।। अत्र चतुर्थोऽमात्रः । अगम्यत्वाद्विश्वादिमात्राविलक्षणः कुतः अव्यवहार्यः व्यावहारिकप्रपञ्चसंम्पर्शरहितः प्रपञ्चोपशमः प्रपञ्चवाधावधिभूतः अद्वैतो

भेदरहितः ओंकारः शिव आत्मैवाहमेवेति योवेद सप्रागप्यात्मना स्वभावेनात्मा परमात्मैव सन्नप्यात्मानं स्वात्मानमेव तुरीयं विशति । तेनैकीभूतो भवति । यद्वा शिव आत्मैवेति योवेद तमात्मानमुपासकमात्मैवोपास्य एव तादात्म्येन संविशत्यैकीभवतीत्यन्यथाप्रतीतेरमात्र इत्यारभ्योंकार इत्यन्यस्य प्रागेव सम्यग्व्याख्यातत्वात् आत्मैवेत्यादि व्याचष्टे ।। **आत्मैवेति** ।। यएवं वेद स उपासकः अन्याभिमानं त्यक्त्वाऽऽत्मैव भूत्वा अनात्मदेहादिसंपर्कत्यागेन शुद्ध आत्मैव भूत्वेति यावत् । परमात्मनैव परमात्मानुग्रहेणैव परमात्मानं प्रविशतीत्यर्थः ।

ननु उक्तानुवादेनाकरवाच्यत्वादिविधिपरेषु जागरितस्थानो वैश्वानरः प्रथमामात्रेत्यादिवाक्येषु स्थानपादानामनुवादेनाकारादिवाच्यत्वं विहितमतोत्रापि प्रपञ्चोपशमः । मुक्तिस्थानः अमात्रश्चतुर्थः विश्वादिविलक्षणः चतुर्थमात्रा तुर्य इत्येतावदनुवादेनोंकार इति विधेयं । अव्यवहार्यत्वादिकमधिकमेव । मन्मतेतु तुरीये गतिरुपासकस्य नास्तीत्युक्तं तत्कुतः तदभावेच किं फलमुपासकस्येति शंकायां प्रसिद्धमात्राविलक्षणत्वात्तद्वदगम्यत्वं नास्ति फलंतु तदैक्यमेवेति वक्तुं वैलक्षण्योपपादनायाव्यवहार्यत्वादिकं पुनरुच्यत इति सार्थकमेवेत्यत आह ।। **अव्यवहार्यत्वमिति** ।। विश्वाद्युपासकानां उपास्यैरप्यादिमत्त्वं समं फलमित्युक्तं । तुरीयोपासकस्योपास्येन कीदृशं फलं सममिति जिज्ञासायां प्राक् तुरीयविशेषणतयोक्तमव्यवहार्यत्वादिकमत्रोपासकेऽपि सममिति दर्शयितुं फलसन्निधौ पुनरव्यवहार्यत्वादिकमुक्तं । विश्वादि विशेषणतयोक्तं वहिःप्रज्ञत्वसप्तांगत्वादिकंतु नसममित्यनुवादे पुनर्नोक्तमिति भावः । तथाह्युपासकस्य मुक्तस्याव्यवहार्यत्वं जाग्रदाद्यवस्थाराहित्यं । प्रपञ्चोपशमो देहवंधराहित्यं । शिवत्वंतु निर्दुःखसुखरूपत्वमेव । अद्वैतत्वंतु देहादावाभिमानशब्दितमिथ्याज्ञानराहित्यमवगन्तव्यं । अतएव आत्मैव भूत्वेत्युक्तमिति भावः।

अद्वैत ओंकार इत्यत्र तुरीयस्य समग्रप्रणवप्रतिपाद्यत्वप्रतीतिं वारयन्नात्मैव संविशतीत्यादेरुक्तार्थत्वे प्रमाणमाह ।। **तुरीयमिति** ।। नादोनाम वर्णविशेषो मन्त्रशास्त्रे प्रसिद्ध इति कर्मनिर्णयटीकोक्तेरोंकारान्तर्गतो

वर्णविशेषः न तूदात्तादिवत्तद्धर्मः स्वरविशेषः । "अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः" इत्यादेश्च । तमिमं विशेषं द्योतयितुं नादे ओंकार-संज्ञा उपनिषदि प्रयुक्तेति भावः । वक्ष्यतेचैतत् । ऐक्यं व्यावर्तयितुमुक्तं **तमेवेति** । प्रविशेदेवेत्यन्वयः । आत्मैव भूत्वेत्यस्य तात्पर्यं शुद्धरूप इति । अव्यवहार्यत्वादिकमुपासकस्य सममित्येतत् प्रमापनायोक्तं **तत्सदृशेति** । सादृश्यंच सर्वप्रकारेणेति न मन्तव्यमित्याह ।। **ज्ञानानन्दाविति** ।। उपलक्षणमेतत् । अन्येच गुणा इति द्रष्टव्यं ।

## पदार्थदीपिका

तुरीयस्य नादप्रतिपाद्यत्वं वक्तुमयं खंडः प्रवृत्तः । तत्र नादप्रतिपाद्यत्वेन तुरीयज्ञानिफलप्रतिपादकं आत्मैवेत्यादिवाक्यं अभेदप्रतीतिनिरासाय सम्यग्व्याचष्टे ।। **आत्मेवेत्यादिना** ।। पारतंत्र्यादिविशिष्टस्वरूपानुभवमपरित्यज्येत्यर्थः । एवकारलब्धार्थं दर्शयति ।। **अन्याभिमानमिति** ।। देहाद्यभिमानमित्यर्थः। आत्मनेत्यस्यार्थः परमात्मनैवेति । प्रसन्नेन तुरीयेणेत्यर्थः। तत्प्रसादादिति यावत् । परमात्मानं तुरीयं । नन्वदृष्टमव्यवहार्यमित्यादिना पूर्वं तुरीयस्याव्यवहार्यत्वादेः प्रतिपादनादत्र पुनरव्यवहार्यत्वादिकं तुरीयस्य कस्मादुच्यत इत्यतस्तदभिप्रायमाह ।। **अव्यवहार्यत्वादिकमिति** ।। अत्र तुरीयोपासके । विश्वाद्युपासके तत्साम्यस्येव तुरीयोपासकेपि तत्साम्यस्यावश्यं वक्तव्यत्वादव्यवहार्यत्वादिधर्मेण तत्साम्यमिति दर्शयितुं पुनरत्राव्यवहार्यत्वादिकमुक्तमित्यर्थः। अद्वैत ओंकार इत्यत्र तुरीयस्य समग्रोंकारप्रतिपाद्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे **तुरीयमिति**।। तथाचात्रोंकारशब्देन तदवयवो नादो ग्राह्यः । नादोनाम वर्णो मंत्रशास्त्रे प्रसिद्धः । तत्सदृशात्मवानिति तुरीयवत्तदुपासकस्यापि लोकव्यवहारागोचरत्वादव्यवहार्यत्वादिधर्मैस्तत्सदृशत्ववत् ज्ञानानंदादिगुणैरपि तत्सदृशत्वं किंनस्यादित्यत आह ।। **ज्ञानानंदाविति** ।। यद्यपि तत्सदृशात्मवानिति सामान्येनोच्यते तथापि ज्ञानानंदो शक्तिश्चेत्येतेतद्धर्माः विमुक्तस्य जीवस्य क्वचिदपि नभगवज्ज्ञानादिसमा इत्यर्थः । कस्मान्न समा इत्यत आह ।। **पारतंत्र्यमिति** ।। परतंत्रत्वादित्यर्थः ।

## उपनिषत्

अत्रैते श्लोका भवन्ति ।

ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ।।
युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ।।

## भाष्यम्

चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि । जाग्रदादिप्रणयनात् .....।

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - प्रणवावयवाकारादिप्रतिपाद्यभगवद्रूपज्ञानमन्यस्मरणत्यागेनापादनीयमित्यादौ मंत्रान् प्रमाणयन्नाह ।। **अत्रैत इति** ।। मंत्रं पठति ।। **ओंकारमिति** ।। पादशःपादैः ।

संसारभयतितीर्षुणोंकारो भगवान् सर्वथा ध्येय इत्यत्र मंत्रं पठति ।। **युंञ्जीतेति** ।। विश्वादिरूपाणां परस्परं मूलरूपेणच न ज्ञानादिगुणैरपकर्षो ज्ञातव्य इत्याह ।। **प्रणव इति** ।।

**भाष्यार्थः** - युञ्जीत प्रणवे चेत इत्यादौ बहुवारमावर्त्यमानः क इति न ज्ञायते तदाह ।। **चतूरूपस्येति** ।। प्रणवाभिधेयश्चतूरूपो विष्णुर्भवतु किं कुर्वंस्तथोच्यते इत्यत आह ।। **जाग्रदिति** ।। प्रकृष्टं नयतीति प्रणव इत्यर्थः ।

## भाष्यविवृतिः

प्रणवावयवाकारादिप्रतिपाद्यविश्वादिध्यानमन्याचिन्तनपूर्वं करणीयमित्यभिधत्ते ।। **अत्रैत इति** ।। पादा मात्रा विश्वादिवाचकाः । "ओंकारं पादशो ज्ञात्वा नकीञ्चिदपि चिन्तयेत्" ओंकारस्यैव पादशो ध्यानमावश्यकमित्यर्थः । चतुरूपपरमात्मनि मनोनियोजनम् अवश्यकर्तव्यमिति विधित्सद्गुणान्तरमपि ब्रह्मणो विदधत् तज्ज्ञानस्यफलं विधत्ते ।। **युञ्जीतेत्यादिना** ।।

## भाष्यार्थरत्नावलिः

तुरीयस्याव्यवहार्यत्वादौ द्वितीयखंड एव मन्त्राणां उदाहृतत्वात् । तज्ज्ञानिनः तत्प्राप्तिरूपफले नामात्रे विद्यते गतिरिति तृतीखंडान्ते पठितत्वात् । अधुना यत्तृतीयोपक्रमे "सोऽयमात्माध्यक्षरमोंकारः अधिमात्रं पादा मात्रा अकार उकारोमकारः" इत्यादिनोमित्याक्रियमाणस्यान्तर्यामिणो मात्रा अपि पूर्णा इति प्रतिज्ञाय पादामात्रा इति मात्रापदार्थमुक्त्वा तेषामकाराद्यर्थतयोपास्यत्वमनुसंहितं स्पष्टं विधेरभावात् । आप्नोति हवाइत्याद्यर्थवादबलात् विध्युन्नयनस्य प्राप्तत्वात् । स्पष्टं तद्विधानपूर्वं ध्यानाङ्गाप्रतिपादनपरा मन्त्राः पठ्यन्ते ।। **अत्रैत इति** ।। ओमित्याक्रियमाणमन्तर्यामिणं द्वादश अकारादिप्रतिपाद्यविश्वादिपादचतुष्टयवत्वेन विद्याज्जानीयात् । पादानाम क इत्यत उक्तं ।। **पादामात्राइति** ।। प्रागुपनिषदि मात्रानुवादेन पादत्वमुक्तमिह पादानुवादेन मात्रत्वमिति भेदः । एवमोंकारं गुरूपदेशेनाकाराद्यर्थतया पादशो ज्ञात्वा चिन्तयेदुपासीत । प्रयोजनाद्यभावान्न कर्तव्या उतोपासना कर्तव्येति संशयो नकार्यः । नकिंचिदपि देवतान्तरं विषयजातं वा । न चिन्तयेदित्यर्थः ।

ध्याननैरन्तर्यलक्षणांगांतरकथनपूर्वं ध्येयगुणफलकथनपूर्वं अधिमात्रमित्युक्ते अंशानां पूर्णत्वे प्रमाणमुच्यते ।। **युञ्जीतेति** ।। अत्र प्रणवस्य ब्रह्मत्वमुच्यत इत्यन्यथाप्रतीतेर्व्याचष्टे ।। **चतूरूपस्येति** ।। जाग्रदादिमोक्षांतस्य प्रकर्षेण नयनान्नियमनात् । यद्वा जाग्रदादौ बाह्याद्यर्थानां प्रकर्षेण नयनाज्ज्ञापनात् ।

## पदार्थदीपिका

अत्र स्वोक्तार्थे संमतित्वेन सलिलेश्वरो मंत्रानुदाहरति ।। **अत्रैतइति** ।। सलिलेश्वरोदाहृते मंत्रे ओंकारं पादश अवयवशः विद्यादितिवत् युंजीत प्रणवं चेत इत्यादिकं न तुरीयमात्रनिष्ठं । किंतु चतूरूपसाधारणमित्याशयेन तत्प्रमाणेनैव व्याचष्टे ।। **चतूरूपस्येति** ।। प्रणवशब्दवाच्यत्वं केन निमित्तेनेत्यत आह ।। **जाग्रदादीति** ।।

## उपनिषत्

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ।।
सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ।।
प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ।।
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ।
स मुनिर्नेतरो जन इति ।।

।। इति चतुर्थः खण्डः ।।

इति श्रीमाण्डूकोपनिषदि द्वितीयोऽध्यायः

समाप्ता चोयमुपनिषत्

* * *

## भाष्यम्

........................स एव ब्रह्म बृंहणात् ।
ओमित्याक्रियमाणत्वादोङ्कारः स प्रकीर्तितः ।
आदिमत्वादयो ह्यर्था ओमित्यस्य श्रुतौ श्रुताः ।
अपूर्वः कारणाभावान्नाशाभावादनन्तरः ।
पराधीनस्थित्यभावादनपर उदाहृतः ।
सर्वगत्वादबाह्यश्च तं ज्ञात्वा प्रविमुच्यते । इति च ।
'परत्वमपरत्वं च विष्णोरेकस्य वै यदा ।
श्रूयते नतु सामर्थ्ये भेदस्तत्र कथञ्चन ।।
अवतारस्य पूर्वत्वात्पौर्वापर्यमुदाहृतम् ।।' इति ब्रह्मतर्के ।

**पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यादेरर्थः ।**

**एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।**
**यस्तं वन्दे चिदात्मानं विष्णुं विश्वादिरूपिणम् ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं**
**माण्डूकोपनिषद्भाष्यं सम्पूर्णम् ।।**

## श्रीव्यासतीर्थविरचिता भाष्यटीका

**खंडार्थः** - अपरमपरः प्रणवो ब्रह्म हि परं परश्च प्रणवो ब्रह्मेति स्मृतः। ब्रह्मेत्युक्तं पूर्णत्वं विशदयन्नाह ।। **अपूर्व इति** ।। उक्ताः पूर्णत्वगुणाः नोपचरिता इति भावेन तथावेत्तुः फलमाह ।। **एवं हीति** ।। व्यश्नुते प्राप्नोति। तदनंतरं तज्ज्ञानानंतरं ।। अनंतरः अबाह्य इति तस्यांतर्बहिर-न्यन्नास्तीत्युक्तं । नकेवलमेतावदपि तर्हि स्वयं सर्वस्यांतर्बहिश्च इत्याह ।। **प्रणवमिति** ।। एवं समस्तव्यस्तप्रणवाभिधेयोपास्तिमुक्त्वा तामनुवदन् तज्ज्ञानिनं स्तुवन्नुपसंहरति ।। **अमात्र इति** ।।

**इति श्रीमांडूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां**
**।। खंडार्थे चतुर्थः खंडः ।।**

**भाष्यार्थः** - शिवोऽद्वैत ओंकार इत्यत्र द्विरावृत्तोंकारपदं ब्रह्मपदं च व्याचष्टे ।। **ओमिति** ।। प्रणवावयवाकारोकारमकारवाच्यविश्वादीनामा-प्त्यादिमत्त्वादयो येऽकाराद्यर्थाः ते तथैवेत्यत्र प्रमाणांतरमाह ।। **आदिमत्त्वादय इति** ।। ओमित्यस्यावयवानामिति ग्राह्यं । पूर्वो न भवतीति नविद्यतेऽतरोऽतस्थोयस्येति, नविद्यते परं अन्यद्भिन्नं यस्मादिति प्रतीतिं निवारयन् अपूर्वोऽनंतरोऽवाह्य इति पदानि व्याचष्टे ।। **अपूर्वइत्यादिना** ।। "प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः" इत्यस्यावताराणां सामर्थ्यतः परत्वापरत्वप्रतिपादकत्वप्रतीतिं निवरयन्नाह ।। **परत्वमिति** ।। पूर्वत्वा-त्पश्चिमत्वाच्चेति ग्राह्यं। अन्यथाप्रतीतिं परिहृत्येदानीमर्थमाह ।। **पूर्वेति** ।। यत्प्रमादाद्यत्प्रीत्यै मांड्रकोपनिषद्भाष्यमुपक्रम्य समापितं तमेव तदुक्तगुणै-रुपश्लोकयन् प्रणामेन समापयति ।। **एकोपीति** ।। निर्विशेषोऽपींद्रा-

र्जुनादिवद्विशेषरहितोऽपि विश्वादिचतूरूपेण चतुर्धा सन् जाग्रदादिचतुर्धा व्यवहारभागित्यशेषमतिमंगलम् ।

**यः सर्वजीवनेत्रादौ स्थित्वाऽवस्थाः प्रवर्तयन् ।**
**मोक्षदश्च रमानाथं वंदे तं मध्ववल्लभं ।। छ ।।**

**।। इति श्रीमदानंदतीर्थभगवत्पादविरचितमांडूकोपनिषद्भाष्यटीका व्यासतीर्थमुनिविरचिता संपूर्णा ।।**

## प्रकाशिका

अत्र विश्वादिषु पूर्वस्यैव ब्रह्मत्वं न त्वपरस्येति शङ्कां श्रुतिरेव वारयति ।। **प्रणवो ह्यपरं ब्रह्मेति** ।। परं पूर्वरूपं च ब्रह्म । अपरमपररूपं च ब्रह्म । तत्र ज्ञानानन्दादिगुणानां सर्वत्र साम्यादिति हेतुसूचनाय हिशब्दः । तर्हि पूर्वापरभावः कथमिति चेन्न । मत्स्यकूर्मादिरूपाणामिव विशेषबलेनैवोपपपत्तेरित्यपि हिशब्देनैव सूचितम्। अपूर्वः पूर्वशब्दवाच्यकारणरहितः। अनन्तरः अन्तं नाशं राति ददातीत्यन्तरो मृत्युस्तद्रहितोऽनन्तरः । तथा स्वकृतकर्माधीनतया देहान्तर्गतजीववदन्तरो न भवतीत्यनन्तरः । न विद्यते बाह्यं यस्मात् सोऽबाह्यः, सर्वगत इत्यर्थः । न विद्यते परमुत्तमं यस्मात् सोऽपरः सर्वोत्तमः। अव्ययः वृद्धिह्रासरहितः । आदिः आदौ विद्यमानः। **मध्यं** मध्ये विद्यमानं ब्रह्म प्रणव एव । अन्तः नियामकतया सर्वेषां हृदि विद्यमानः सर्वस्यान्ते विद्यमानो वाऽन्तः । तत् प्रणवाख्यं ब्रह्म अनन्तरं ज्ञानानन्तरं व्यश्नुते विशेषेण प्राप्नोति । सर्वगतस्य व्याप्तिः संसारावस्थायामप्यस्तीत्यतो वीत्युपसर्गः ।

अस्यामुपनिषदि चतूरूपतया प्रतिपाद्यमानो विष्ण्वाख्यो जगदीश्वर एव न तु जीवादिरिति भावेन श्रुतिः स्वाभिप्रायं स्वयमेवोद्घाटयति ।। **प्रणवं हीति** ।। प्रणवं हीश्वरं सर्वेश्वरं विद्यात् । सर्वस्य मुक्तामुक्तात्मकसकलजीवसमुदायस्य हृदि स्थितं हृदये स्थितम् । सर्वव्यापिनं सकलचेतनाचेतनात्मकप्रपञ्चव्यापिनं च विद्यात् । अमात्रः भिन्नांशरहितः, इयत्तारहितो वा। अनन्तमात्रः अभिन्न इत्यत्र मन्दमतिभिराशङ्कितस्वगतभेदरहितो वा।

"नेह नानाऽस्ति किञ्चन"इति हि श्रुतिः । इममेवार्थमाह भाष्यकारः ।। **अपूर्वः कारणाभावादित्यादिना**।। वारं वारं तत्र तत्र कथिताद्वैतशब्दस्य पराभिलषितभेदमात्रराहित्यरूपार्थो न ममाभिप्रेत इति श्रुतिः स्वयमेव वाधकानि वदन्त्युपसंहारव्याजेन परस्य दुराशामपि दूरयितुं सर्वेश्वरत्वसर्व-जीवहृन्मध्यगतत्वसर्वव्यापित्वाख्यभेदकविशेषणवत्तया परमात्मानं विशिनष्टीति सर्वमतिमङ्गलम् ।

आचार्यैः प्रमाणवचनैर्व्याख्यातत्वान्नैतच्छुत्यर्थे प्रेक्षावतां शङ्कावकाशः । तथाऽपि "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी"इतिवत् स्वमतदुराग्रहेण वदन्तं प्रति च हृदिस्थमध्वकृपयैव सकलश्रुतिवाक्यानामप्येकवाक्यतयैव सर्वेषां विदुषां मनोनुरञ्जकमर्थं ब्रूमः- तथाहि "एष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्य"इति श्रुतौ प्रथमं तावदनीश्वरजीवेभ्योऽत्यन्त-भिन्नो भवितुमर्हति सर्वेश्वरत्वात् । यो जीवादत्यन्तभिन्नो न, न स सर्वेश्वरोऽपि । यथा देवदत्तः । अथवा ईश्वरस्य सर्वेश्वरत्वं "एष सर्वेश्वरः"इति श्रुत्यैव सिद्धम्। जीवानामनीश्वरत्वं स्वस्वानुभवसिद्धम्। अर्थात् श्रुत्यादिसिद्धम् । एवं च सति "ईश्वरजीवौ परस्परमभिन्नौ न, विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत्" इत्यन्वय्यनुमानमुक्तं भवति । किं च "एष सर्वेश्वरः" इति भगवतः सर्वेश्वरत्वं वदन्ती श्रुतिः सर्वस्य जगतो मिथ्यात्वे स्वोक्तसर्वेश्वरत्वस्यैव भङ्गप्रसङ्गाज्जगतः सत्यतामभिप्रैतीति सिद्धम् । तथा च "ईश्वरो जगतो मिथ्यात्वं न सहते, विश्वसत्यतायाः स्वसर्वेश्वरत्वोपयोगित्वात् । यद्यदीश्वरत्वोपयोगि स न तन्मिथ्यात्वं सहते । यथा राजा राष्ट्रस्येति । कथमन्यथा वराहरूपी भगवान् रसातलगतां रसामुद्दधारेत्यपि श्रुतिरेवासूचयत् ।

तथा भेदजगत्सत्यत्वसाधकतयोक्तानुमानद्वयेऽनुकूलतर्ककथनाय सर्वज्ञ-त्वादिविशेषणत्रयमुक्तम् । तथा हि-यदीश्वरस्य तदधीनतयोक्तजगतश्च भेदो न स्यात्तर्ह्येष परमेश्वरः सर्वज्ञः कथं स्यात् । भवति च भगवान् सर्वज्ञः । अतोऽल्पजगतो भिन्नश्च । एवं सर्वस्याभावे कथमेष सर्वज्ञः स्यात् । किन्तु सर्वाभावज्ञ एव स्यात् । भवति च सर्वज्ञः । अतस्तत्त्वेनेश्वरप्रमा-

विषयीभूतं सर्वं जगच्च सत्यमिति भेदे जगत्सत्यत्वे चानुकूलतर्कद्वयमुक्तं भवति । यदि चेश्वरजगतोर्भेदो न स्यात्तर्हीश्वरः सर्वान्तर्यामी कथं स्यात् । भवति च सर्वान्तर्यामी । "एष त आत्माऽन्तर्यामी"इति श्रुतेः । "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्"इति सूत्राच्च । सर्वस्यान्तर्नियमयति यः सहि सर्वान्तर्यामी । एवं राजभृत्ययोरिव नियामकनियम्ययोः कथं भेदो न स्यादिति । सर्वाभावे च कथं तदन्तर्यामी स्यात् । न हि वन्ध्यासुतस्य कोऽप्यन्तर्यामी दृष्टः । अतोऽत्रापि पूर्ववदनुकूलतर्कद्वयमुक्तं भवति । तथा यदीश्वरजगतोर्भेदो न स्यात्तर्ह्येष सर्वस्य योनिः कथं स्यात् । भवति सर्वस्य योनिः। "यतो वा इमानि भूतानि जायन्ते"इतिश्रुतेः । "जन्माद्यस्य यतः" इति सूत्रात्। "जन्माद्यस्य यतोऽन्वयादितरतः" इति भागवतोक्तेश्च। एवं च कुलालघटयोरिव स्रष्टृसृज्ययोः कथं भेदो न स्यात् । एवं सर्वस्याभावे कथं सर्वस्य योनिः स्यात् । न हि शशविषाणस्य कारणं क्वापि श्रूयत इति ।

प्राथमिकविशेषणसिद्धानुमानसाधितभेदं जगत्सत्यत्वं चानुकूलतर्कैः साधयित्वोपनिषत् स्वयमेव परपक्षे बाधकतर्कांश्चाऽह- **"प्रपञ्चो यदि विद्येत इति** ।। अस्याः श्रुतेः परेषां मनसि परिवर्तमानोऽर्थस्तावत् कपोणिगुडायित एव । यदि विद्येत तर्हि निवर्तेतेति तर्कमूलव्याप्तेः ब्रह्मणि व्यभिचारात् । न च निवर्तते तस्मान्न विद्यत इति विपर्ययपर्यवसानं च ब्रह्मण्येव व्यभिचारात् स्वप्रक्रिययैव विरुद्धम् । तस्मात्तर्कानुकूलव्याप्तिघटंनाय "न संशयः" इत्यत्र वक्ष्यमाणनञावृत्त्या यदि प्रपञ्चो न विद्येत यदीदं प्रपञ्चान्तर्गतं द्वैतं मायामात्रं स्यात्तर्ह्युभयमपि निवर्तेत । अत्र संशयो न । मिथ्याभूतस्य शुक्तिरजतादेः मायाकल्पितकरितुरगादेश्च निवृत्तिदर्शनात् । न च निवर्तते । तस्मात्प्रपञ्चो न विद्यत इति न । द्वैतं च मायामात्रं न । अनादिकालमारभ्य प्रवाहतोऽनुवर्तमानमहीमहीधरादिप्रपञ्चस्य, वर्णाश्रमादिरूपेण गुरुशिष्यमातापितृभार्याभर्त्रादिरूपेण गजतुरगपशुपक्ष्यादिरूपेण चानुवर्तमानस्य चानन्तजीवनिष्ठद्वैतस्य पृथिव्यप्तेजोवाय्वादिरूपेण अनुवर्तमानजडनिष्टद्वैतस्य च सकलशिष्टव्यवहारोपयोगितया श्रुतिस्मृतिसिद्धस्या-

"नेह नानाऽस्ति किञ्चन"इति हि श्रुतिः । इममेवार्थमाह भाष्यकारः ।। **अपूर्वः कारणाभावादित्यादिना** ।। वारं वारं तत्र तत्र कथिताद्वैतशब्दस्य पराभिलषितभेदमात्रराहित्यरूपार्थो न ममाभिप्रेत इति श्रुतिः स्वयमेव बाधकानि वदन्त्युपसंहारव्याजेन परस्य दुराशामपि दूरयितुं सर्वेश्वरत्वसर्व-जीवहृन्मध्यगतत्वसर्वव्यापित्वाख्यभेदकविशेषणवत्तया परमात्मानं विशिनष्टीति सर्वमतिमङ्गलम् ।

आचार्यैः प्रमाणवचनैर्व्याख्यातत्वान्नैतच्छुत्यर्थे प्रेक्षावतां शङ्कावकाशः । तथाऽपि "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी"इतिवत् स्वमतदुराग्रहेण वदन्तं प्रति च हृदिस्थमध्वकृपयैव सकलश्रुतिवाक्यानामप्येकवाक्यतयैव सर्वेषां विदुषां मनोनुरञ्जकमर्थं ब्रूमः- तथाहि "एष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्य"इति श्रुतौ प्रथमं तावदनीश्वरजीवेभ्योऽत्यन्त-भिन्नो भवितुमर्हति सर्वेश्वरत्वात् । यो जीवादत्यन्तभिन्नो न, न स सर्वेश्वरोऽपि । यथा देवदत्तः । अथवा ईश्वरस्य सर्वेश्वरत्वं "एष सर्वेश्वरः"इति श्रुत्यैव सिद्धम्। जीवानामनीश्वरत्वं स्वस्वानुभवसिद्धम्। अर्थात् श्रुत्यादिसिद्धम् । एवं च सति "ईश्वरजीवौ परस्परमभिन्नौ न, विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत्" इत्यन्वय्यनुमानमुक्तं भवति । किं च "एष सर्वेश्वरः" इति भगवतः सर्वेश्वरत्वं वदन्ती श्रुतिः सर्वस्य जगतो मिथ्यात्वे स्वोक्तसर्वेश्वरत्वस्यैव भङ्गप्रसङ्गाज्जगतः सत्यतामभिप्रैतीति सिद्धम् । तथा च "ईश्वरो जगतो मिथ्यात्वं न सहते, विश्वसत्यतायाः स्वसर्वेश्वरत्वोपयोगित्वात् । यद्यदीश्वरत्वोपयोगि स न तन्मिथ्यात्वं सहते । यथा राजा राष्ट्रस्येति । कथमन्यथा वराहरूपी भगवान् रसातलगतां रसामुद्धधारेत्यपि श्रुतिरेवासूचयत् ।

तथा भेदजगत्सत्यत्वसाधकतयोक्तानुमानद्वयेऽनुकूलतर्ककथनाय सर्वज्ञ-त्वादिविशेषणत्रयमुक्तम् । तथा हि-यदीश्वरस्य तदधीनतयोक्तजगतश्च भेदो न स्यात्तर्ह्येष परमेश्वरः सर्वज्ञः कथं स्यात् । भवति च भगवान् सर्वज्ञः । अतोऽल्पजगतो भिन्नश्च । एवं सर्वस्याभावे कथमेष सर्वज्ञः स्यात् । किन्तु सर्वाभावज्ञ एव स्यात् । भवति च सर्वज्ञः । अतस्तत्त्वेनेश्वरप्रमा-

विषयीभूतं सर्वं जगच्च सत्यमिति भेदे जगत्सत्यत्वे चानुकूलतर्कद्वयमुक्तं भवति । यदि चेश्वरजगतोर्भेदो न स्यात्तर्हीश्वरः सर्वान्तर्यामी कथं स्यात् । भवति च सर्वान्तर्यामी । "एष त आत्माऽन्तर्यामी"इति श्रुतेः । "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्"इति सूत्राच्च । सर्वस्यान्तर्नियमयति यः सहि सर्वान्तर्यामी । एवं राजभृत्ययोरिव नियामकनियम्ययोः कथं भेदो न स्यादिति । सर्वाभावे च कथं तदन्तर्यामी स्यात् । न हि वन्ध्यासुतस्य कोऽप्यन्तर्यामी दृष्टः । अतोऽत्रापि पूर्ववदनुकूलतर्कद्वयमुक्तं भवति । तथा यदीश्वरजगतोर्भेदो न स्यात्तर्ह्येष सर्वस्य योनिः कथं स्यात् । भवति सर्वस्य योनिः। "यतो वा इमानि भूतानि जायन्ते"इतिश्रुतेः । "जन्माद्यस्य यतः" इति सूत्रात्। "जन्माद्यस्य यतोऽन्वयादितरतः" इति भागवतोक्तेश्च। एवं च कुलालघटयोरिव स्रष्टृसृज्ययोः कथं भेदो न स्यात् । एवं सर्वस्याभावे कथं सर्वस्य योनिः स्यात् । न हि शशविषाणस्य कारणं क्वापि श्रूयत इति ।

प्राथमिकविशेषणसिद्धानुमानसाधितभेदं जगत्सत्यत्वं चानुकूलतर्कैः साधयित्वोपनिषत् स्वयमेव परपक्षे बाधकतर्कांश्चाऽऽह- **"प्रपञ्चो यदि विद्येत इति** ।। अस्याः श्रुतेः परेषां मनसि परिवर्तमानोऽर्थस्तावत् कपोणिगुडायित एव । यदि विद्येत तर्हि निवर्तेतेति तर्कमूलव्याप्तेः ब्रह्मणि व्यभिचारात् । न च निवर्तते तस्मान्न विद्यत इति विपर्ययपर्यवसानं च ब्रह्मण्येव व्यभिचारात् स्वप्रक्रिययैव विरुद्धम् । तस्मात्तर्कानुकूलव्याप्तिघटंनाय "न संशयः" इत्यत्र वक्ष्यमाणनञावृत्या यदि प्रपञ्चो न विद्येत यदीदं प्रपञ्चान्तर्गतं द्वैतं मायामात्रं स्यात्तर्ह्युभयमपि निवर्तेत । अत्र संशयो न । मिथ्याभूतस्य शुक्तिरजतादेः मायाकल्पितकरितुरगादेश्च निवृत्तिदर्शनात् । न च निवर्तते । तस्मात्प्रपञ्चो न विद्यत इति न । द्वैतं च मायामात्रं न । अनादिकालमारभ्य प्रवाहतोऽनुवर्तमानमहीमहीधरादिप्रपञ्चस्य, वर्णाश्रमादिरूपेण गुरुशिष्यमातापितृभार्याभर्त्रादिरूपेण गजतुरगपशुपक्ष्यादिरूपेण चानुवर्तमानस्य चानन्तजीवनिष्ठद्वैतस्य पृथिव्यप्तेजोवाय्वादिरूपेण अनुवर्तमानजडनिष्टद्वैतस्य च सकलशिष्टव्यवहारोपयोगितया श्रुतिस्मृतिसिद्धस्या-

निवृत्तेरेव प्रमितत्वात् । ज्ञानाङ्गयज्ञादिविहितक्रियासाधनव्रीहियवधनघृतदध्यादिजडप्रपञ्चाभावे साक्षाज्ज्ञानोपयोगिश्रवणादेः कारणभूतश्रुतिस्मृत्यादिजडप्रपञ्चाभावे वक्तृश्रोत्रादीनां जीवनहेतुभूतधनधान्यादिरूपजडप्रपञ्चाभावेऽपि चित्रफलहेतूनामेतेषां परस्परं द्वैताभावे वक्तृश्रोत्रादिरूपजीवद्वैताभावे च सर्वापेक्षितमोक्षस्यैवानुदयप्रसंगात् । एवं च चिरकालानुवृत्तस्यास्य ब्रह्मण इव न भाविनी निवृत्तिरपि शङ्कितुं शक्यते । 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम्' । इति गीतायं साक्षाद् भगवत इवाहं च नासमिति न, त्वं च नासीरिति न, इमे जानाधिपा नासन्निति नेति विचित्रानन्तजीवानां तन्निष्ठद्वैतस्य च स्वसमानयोगक्षेमतया अनादित्वमुक्त्वा "अतः परं सर्वे न भविष्याम इति च नैव" इति स्वसमानयोगक्षेमतया भाव्यनन्तजीवपरम्परायास्तन्निष्ठभाविद्वैतानां चानवच्छिन्नभविष्यत्कालेऽपि निवृत्त्यभावस्यैवैवकारेणावधारितत्वात् प्रपञ्चनिवृत्तिस्तन्निष्ठद्वैतनिवृत्तिश्च न मनसाऽपि स्मर्तुं शक्या । चशब्देन मुक्तावपि प्रपञ्चनिवृत्तिं समुच्चिनोति । "न त्वेवाहं" इत्यत्र विद्यमानतुशब्दस्याहन्त्विति सम्बन्धः । तेन च स्वस्य देहपरम्परां विनैकेनैव देहेनानाद्यनन्तकालेष्ववस्थानाख्यविशेषं सूचयति । "वयं सर्वे भविष्यामः" इत्येवोक्ते चिरकालस्थायित्वेनापीयमुक्तिरिति परस्य दुराशा स्यात्। तामप्युन्मूलयितुं 'न भविष्याम इति च नैव' इति नञ्द्वयेन "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः" इति न्यायादनवच्छिन्नभविष्यत्कालेऽपि स्वात्मवत् प्रपञ्चस्य द्वैतस्यातिशयं सङ्गृह्णाति । तेन परैराशास्यमानभाविनिर्धर्मत्वशंकाख्यवृक्षस्यापि मूलच्छेद एवाभूदिति ज्ञेयम् । अतोऽस्ति च धूमस्तस्मदग्निरप्यस्तीतिवद् विपर्ययपर्यवसानस्यैव प्रमितत्वात् परेषामतिकर्कशोऽयं तर्क इत्यनुसन्धेयम् ।

एवं चाद्वैतं परमार्थतो विद्येत तर्हि न निवर्तेत । यथास्थितनिवर्तेतेति क्रियया योगे विद्यमानस्य ब्रह्मणो निवृत्त्यदर्शनेन व्याप्त्यसम्भवान्नअनुषङ्गेनापादकानुसार्यापाद्यमुन्नेयम् । इयं व्याप्तिः परस्यापि सिद्धा । निवर्तते चाद्वैतम् । गुरूपदेशाद् ब्रह्मणि ज्ञाते सत्यद्वैतं न विद्यते । अयं सतां वाद

इति श्रुत्यौवाद्वैतनिवृत्तेर्वक्ष्यमाणत्वात् । युक्तं चैतत् । इहाद्वैनिवृत्त्यभावे उक्तरीत्या सर्वव्यवहारविलोपप्रसङ्गात् । मुक्तावद्वैतनिवृत्त्यभावे च "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति, " परं ज्योतिरुप-सम्पद्य स्वेनरूपेणाभिनिष्पद्यत" इति "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा" इत्यादि श्रुत्युक्तनानाजीवानां नानाविषयभोगानां चाभावप्रसङ्गेन मुक्तेरेवामुक्तित्वप्रसङ्गात् । अत एव "यत्र त्वस्य सर्वमात्मैवाभूत्"इति श्रुतिश्च अव्ययानामनेकार्थत्वाद् यदि अस्य जीवस्य सर्वमात्मैवाभूत्तर्हि केन कं पश्येदिति तर्कमुखेनाद्वैतनिवृत्ति-मेव प्रसाधयति । अन्यथा श्रुत्योः परस्परविरोधप्रसङ्गात् । अतोऽत्रापि निवर्तते चाद्वैतं तस्मान्न विद्यत इति विपर्ययपर्यवसानमावश्यकम्। एवमेक-वाक्यतया तर्कत्रयानिरूपणे प्रायपाठविरोधः । वाक्यभेदश्च प्रसज्येत । एवं चानुपमर्दितपदसम्पदैव प्रागुक्तानुमानद्वयेऽनुकूलतर्कत्रयवत् परपक्षे बाधकत्रयस्यापि सिद्धेः श्रुतेरपीदमेवाभिमतम् । अन्यथा स्वस्या एवाभाव-प्रसङ्गात् । उक्तरीत्या मुक्तिपर्यन्तसकलपदार्थानामप्यभावापत्त्या श्रुतिः स्वव्याघातिनी परघातिनी च स्यात् । तथाऽस्मदुक्तरीत्या सकलजीव-जगत्पोषकान्ने सिद्धे सति कः प्रेक्षावानप्रतीतसकलजगन्नाशकविषसम्पृक्तान्ने मतिं दद्यात् ।

एवमुत्तरवाक्येऽपि विकल्पो भेदो यदि केनचिदज्ञानादिना कल्पितः स्यात् तर्हि निवर्तेत । न च निवर्तते । तस्मात् कल्पितो नेति पूर्वोक्तभेद-स्थिरीकरणाय पुनस्तर्कान्तरमुच्यते । इदं च द्वैतं मायामात्रमिति न मयोच्यते किन्तु मायाकल्पितमिति परकीयदुराशाखण्डनार्थम् । वस्तुतस्त्वि-दमस्य लीलामात्रमित्युक्ते लीलयानिर्मितमित्यर्थस्यैव लोके बहुलमुपलम्भात्। तस्मादुक्तयुक्तिभिः पराजितस्य दुराशैवेदम् । तर्हि सर्वैरपि जगतस्सत्यत्वा-त्तत् कुतो नाङ्गीक्रियत इत्यत उक्तं ।। **उपदेशादिति** ।। उत्तमगुरूप-देशाच्छास्त्रार्थे ज्ञाते सत्यद्वैतं न विद्यत इत्ययं वादो बोद्धुं शक्यते । न त्वन्यथा । अतः केचिद्वाक्यार्थज्ञानाकुशला नेदं तत्त्वं जानन्तीति वाक्य-द्वयस्यापि योजना । अथवा विकल्पो द्वैतं नास्त्यद्वैतमेवास्तीति

विरुद्धपक्षद्वयं यदि केनचिद्बौद्धेन मायावादिना वा कल्पितः स्यात् तर्ह्युपदेशात् पूर्वोत्तरविवेकवतस्तर्ककर्कशबुद्धेर्मध्वाख्यसमीचीनगुरूपदेशाद्विनिवर्तेत निवृत्तिं प्राप्नुयादेएव । तर्कबाधितस्य सर्वानुभवविरुद्धपक्षस्य चिरकालस्थायित्वायोगात् । इदं च यदि पापं कुर्यात्तर्हि नरकं प्राप्नुयादितिवत् वस्तुस्थितिकथनम् । कोऽसौ गुरूपदेश इत्यत उक्तं ।। **अयं वाद इत्यादि** ।। ज्ञाते पूर्वोत्तराविरुद्धतया श्रुत्यर्थे सम्यक् ज्ञाते सति संसारे मुक्तौ चाद्वैतमेव न विद्यते। अयं वादो व्यासशुकयोगिप्रभृतीनां सतां वादः । ते हि स्वग्रन्थे-

"न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।।
तर्हि न सन्न चासदुभयं न च कालजवः ।।
किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ।।
जनिमसतः सतो मृतिमजात्मनि ये च भिदां ।।
विपणमृते स्मरन्त्युपविशध्वनिमारुवत" ।।

इत्यादिना मुक्तावपि भेदमेव स्थिरीचक्रुः । अत एव श्रुतिः "स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता" इति मायासृष्टिमन्य इति पूर्वपक्षतयोक्त्वा "इच्छामात्रं प्रभोः सृष्टिः"इति सत्यजगत्सृष्टिं । स्वपक्षमाह । असमर्थो हि मायासृष्टिं कुर्यात् । समर्थस्तु भगवान् कथं मायासृष्टिं कुर्यादिति युक्तिं सूचयितुं तं प्रभुपदेन विशिनष्टि । "देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा"इति कदाऽप्यनिवर्त्यत्वे स्वाभाविकत्वयुक्तिमपि सूचयति । "स्वभावस्यानपायात्"इति हि प्राचां वाचः । तर्हि "प्रपञ्चोपशमः" "द्वैतस्योपशम" इत्यादिकं कथमुक्तमिति चेन्न। विश्वतैजसप्राज्ञानां जाग्रत्स्वप्नसुषुप्त्याख्यप्रपञ्चोपयोगित्ववन्मुक्तिदायकस्य तुरीयस्य तन्नास्तीत्यभिप्रेत्य विष्ण्वादिषूक्तप्रपञ्चस्योपशमो यस्मादिति प्रपञ्चोपशम इत्युक्तम् । उपस्थितपरित्यागेनानुपस्थितप्रपञ्चपरिग्रहे कारणाभावात् । द्वैतस्योपशम इति तु प्रथमा मात्रेत्यादिना प्रथमत्वद्वितीयत्वतृतीयत्वचतुर्थत्वोक्त्या प्राप्तस्वगतभेदशंकानिवारणार्थमुक्तम्। द्वैतस्य स्वगतभदस्योपशमो यस्मात्स तथोक्तः । अत्राप्युक्तरीत्या प्रसक्तस्वगतभेदं विहायाप्रसक्तानुपपन्नस्ववाक्यविरुद्धजीवेश्वरभेदग्रहणस्यानुचित्तत्वात् । अत इयं श्रुतिस्तदुपक्रमे

सर्वेश्वरत्वादिभेदसाधकमहिमानमुक्त्वा उपसंहारवाक्येऽपि "प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् । सर्वव्यापिनमोङ्कारम्" इति भगवन्महिमोक्त्यैव स्वाभिप्रेतार्थरूपरत्नरक्षार्थं सम्पुटीचकारेति सर्वमवदातम् ।।

**।। इति श्रीमत्कविकुलतिलकवादिराजपूज्यचरणविरचिता माण्डूकोपनिषद्भाष्यटिप्पणी समाप्ता ।।**

## भाष्यविवृतिः

प्रणवोह्यपरं ब्रह्मेत्यादेः पूर्वपश्चिमावतारयोः पूर्णत्वमेव नान्यः कश्चनविशेषः अत एव ब्रह्मतर्के "परत्वमपरत्वं च विष्णोरेकस्य वै यदा । श्रूयते नतु सामर्थ्यभेदस्तत्र कथञ्चन । अवतारस्य पूर्वत्वात्पौर्वा- पर्यमुदाहृतम्" इत्यभ्यधित । तदिदं सर्वमभिप्रेत्याभाषत भाष्यकारः आत्मैव भूत्वेत्यादिना ब्रह्मेत्यादेरर्थ इत्यन्तेन । मङ्गलादीनि मङ्गलमध्यानि मङ्लान्तानि (च शास्त्राणि प्रथन्ते) वीरपुरषकाणि भवन्त्यायुष्मत्पुरषकाणि च भवन्ति (अध्येतारश्च वृद्धियुक्ता यथास्युः) इति महाभाष्ये भाषणात् अवश्यकरणीयतया अन्तेऽपि मङ्गलं न्यभांत्सीत् ।। **एकोऽपीति** ।। निर्विशेषोऽपि अभेदेऽपि इन्द्रार्जुनादिवद्विशेषरहितोऽपि विश्वादिरूपेण चतु(र्धा) जाग्रदादिचतुर्ध्याव्यवहारभाक् इत्यशेषमतिमङ्गलम् ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य माण्डूकोपनिषद्भाष्यस्यविवृतिः श्रीसत्यप्रियमुनिविरचिता समाप्ता ।।**

**श्रीमत्सत्यप्रियाङ्घ्री वां धियै नौमि सदापदः ।**
**निवृत्यै वादिसन्मौलिकिरीटालिविराजितौ ।।**[१]

**।। श्रीकृष्णार्पणमस्तु ।।**

## भाष्यार्थरत्नावलिः

स एव विष्णुरेव । न तु प्रसिद्धः । प्रणव इत्यर्थः ।

ननु विश्वादीनां जाग्रदादिप्रवर्तकत्वमयुक्तं। "आत्मांतरात्म परमात्मेति । मूर्तित्रयं हरेः । जाग्रत्स्वप्नसुषुप्तीनां सृष्ट्यादेश्च नियामकं" इति भागवत-

१. अयं श्लोकः लिपिकारेण अन्ते निवेशितः ।

तात्पर्ये आत्मादीनामवस्थात्रयनियामकत्वोक्तेः । "अनिरुद्धादिरूपेण त्रिधा-तेषु व्यवस्थितः । दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः" इत्यैतरेयभाष्येऽनिरुद्धादीनां तदुक्तेरिति चेन्न । अनिरुद्धादिभिः सहात्मा-दिभिः नियमनं विश्वादिभिरनुभावनमित्यंगीकारे विरोधाभावात् । नन्वत्र प्रकरणे आम्रेडित प्रणव ओंकार एव नेश्वरः । उपसंहारे "सर्वव्यापि-नमोंकारं । ओंकारो विदितो येन" इति प्रणवे ओंकारश्रुतेरित्यत ओंकार-शब्दोपि महायोगविद्वद्रूढिभ्यां भगवति सावकाश इत्याह ।। **ओमितीति** ।।

नन्वेवंशब्दोऽप्योमित्यनेनाभिधानेनाक्रियमाणत्वादेवोंकारः स्वं रूपं शब्दस्येति स्मरणात् । तथाच कथमोंकारो विष्णुरेव स्यादित्यत आह ।। **आदिमत्वादय इति** ।। हि यस्मादकार उकारमकारात्मकस्योंकारस्या-दिमत्वादयोऽर्थाः । आदिमत्वाद्वेत्यादि श्रुतौ श्रुताः तेचार्थाः शब्देन संभावयितुमशक्याः तस्मदोमित्यनेन मुख्यत आक्रियमाणो विष्णुरेवेति स एवात्र विवक्षित ओंकार इत्यर्थः । प्रागिदं सर्वमिति मूलरूपस्य । अयमात्मा ब्रह्मेति तद्विभक्तस्यांतर्यामिरूपस्य अधिमात्रमिति तदंशानां विश्वादीनां चोक्तं पूर्णत्वं सप्रमाणकमुदाहरति ।। **प्रणवोहीति** ।। अपरं अन्योवतारभूतः । प्रणवो जाग्रदादिप्रणायको विश्वादिः ब्रह्म पूर्णः परं परः पूर्वावतारः प्रणवोऽन्तःप्रणायकोऽन्तर्यामीच ब्रह्म पूर्ण इति स्मृतः । पुनः मूलभूतः प्रणवः सर्वप्रणायको ब्रह्म पूर्णः । "येंशास्तस्यतु सर्वेपि पूर्णाः प्रत्येकशो विभोः" इति ब्रह्मतर्के प्रतिपादितः । हिशब्देन "पूर्णमदः पूर्णमिदं" इत्यादि वाजसनेये श्रुतश्चेत्यर्थः । ध्याने आदरापरपर्याया भक्तिरपि अंगमिति भावेन तदर्थं पूर्तिव्युत्पादनार्थं च भगवन्महिमोच्यते ।। **अपूर्व इति** ।। अव्ययः कालपरिच्छित्तिरहितः । परः प्रणवो निर्गुणः। पूर्वः कारणं न भवतीत्यपूर्वः । अन्तरो विच्छेदको न भवतीत्यनंतरः । संहर्ताऽपि न भवति । बाह्यः आधारोपि न । परोऽन्यः सगुणः प्रणवस्तु सर्वस्यादिर्मध्यमं तु नाशकश्चेति मायिनः। अन्येतु नपरः । न समासोऽयं। अपर अवताररूपी रामादिः अपूर्वो न जगत्कारणं । अनंतरो न संहर्ता अबाह्य आधारोपि न भवति । परो मूलरूपी नारायणस्तु सर्वस्य जगत

आदिर्मध्यमन्तश्चेति व्याचक्षते । अतो यथावद्व्याचष्टे ।। **अपूर्व इति** ।। न विद्यते पूर्वः पूर्ववर्ती कारणं यस्येति व्युत्पत्या कारणाभावादपूर्वः । न विद्यतेऽन्तरो विच्छेद इति नाशाभावादनंतरः । न विद्यते अपरः स्थापको यस्येति व्युत्पत्या पराधीनस्थित्यभावादनपरः । सर्वगत्वाद्धेतोः न विद्यते बाह्यो बाह्यस्थितो यस्मादित्यबाह्यः स्वयं तु प्रणवः सर्वस्यादिः कारणं मध्यं स्थापकोंऽतो नाशकश्च । उक्तागुणा नोपचरिता इति भावेन तथा वेत्तुः फलमुच्यते ।। **एवंहीति** ।। एवमुक्तगुणविशिष्टतया प्रणवं विष्णुं ज्ञात्वा तदनंतरं तत्र स्नेहं संपाद्य तदनंतरमुपास्यापरोक्षतश्च ज्ञात्वा प्रारब्धभोगा-नंतरं तत्र तं विशेषाकारेण अश्नुते । प्राप्नोति । अनंतरं विशेषतो भोगानश्नुते अनुभवतीत्यस्य तात्पर्यं। तं ज्ञात्वा विप्रमुच्यत इति । संसारा-द्विमुच्यते प्रकर्षेण च विशेषानंदानुभवेन मुच्यते मुक्तो भवतीत्यर्थः ।

ननु परः प्रणवो निर्गुणं ब्रह्म न जगज्जन्मादिकारणं अपरः प्रणवः सगुणं तु तत्कारणमिति मायावादिरीत्या अपरोवताररूपी न जगज्जन्मादि कारणं परो मूलरूपीतु तत्कारणमिति रामानुजरीप्त्या व्याख्यानं युक्तं । "प्रणवो ह्यपरं ब्रह्म"इति पूर्ववाक्ये परापरभावेन सगुणनिर्गुणभेदस्य मूला-वतारभेदेन सामर्थ्यतारतम्यस्य चोक्तत्वादित्यतः पूर्ववाक्याभिप्रायं प्रमाणेनाह ।। **परत्वमिति** ।। निर्गुणस्य गगनकुसुमायितत्वाद्विष्णोः सगुणस्यैकस्यैव परत्वमपरत्वं च श्रूयते न तु तत्र सगुणनिर्गुणभेदः । नापि तत्र कथंचन केनापि मूलत्वावतारत्वपूर्वावतारत्वपश्चिमावतारत्वादिना कारणेन सामर्थ्य-भेद इत्यर्थः । नन्वादानतो व्यक्तिमायन्त्युरूणामित्युक्तरीत्या व्यक्तिकाले सामर्थ्यभेदाभाव अन्यदा त्वस्ति रुद्रादीनामिवेत्यत उक्तं ।। **सदेति** ।। यदि सगुणनिर्गुणभेदो अवतारे सामर्थ्यभेदो वा नास्ति तर्हि किं तत्परत्वमपरत्वं च श्रुत्युक्तमित्यत आह ।। **अवतारस्येति** ।। एकावतारापेक्षया अन्यावता-रस्य पूर्वत्वादित्यर्थः । कोऽर्थस्तर्हि प्रणवो ह्यपरं ब्रह्मेत्यादेरित्यत आह ।। **पूर्वेति** ।। चशब्दान्मूलरूपे चेत्यपि समुच्चीयते । मंत्रे उक्तावधारणाय हिशब्देन स्मृत इत्यनेन च प्रमाणमुक्तं तत्तात्पर्यंतु पूर्ण एव भवतीति । प्रागुपनिषद्ययमात्मा ब्रह्मादिमात्रमित्यादिना विश्वादीनां व्यापकत्वमुक्तं ।

जागरितस्थान इत्यादिना गुणत्वमित्यतो विरोधपरिहाराय मंत्र उदाहृतः ।। **प्रणवमिति** ।। यं जाग्रदादिप्रणायकं अत एव सर्वस्य हृदये स्थितं विद्यात्तमेवोंकारं "ओतमस्मिन् सर्वं जगत्" इत्योमित्याक्रियमाणं अत एव सर्वव्यापिनं मत्वा धीरः अचिन्त्यैश्वर्यमघटितमपीश्वरे युज्यत इति निश्चित-ज्ञानवानत एव ईश्वरमित्युक्तं । नशोचति । मुक्तो भवति । यद्वा "उपासात्रैविध्यादाश्रितत्वात्" इति न्यायेन अधिकारिभेदेनोपासनार्थमुभयम-प्युक्तमिति भावेनोक्तं ।। **प्रणवमिति** ।। हिशब्देन "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । तमेव शरणं गच्छ" इति भगवद्वाक्यं सूचयति ।

एवमोमित्येतदक्षरमित्यादिना मूलरूपस्य समस्तप्रणवप्रतिपाद्यत्वं तदंशानां विश्वादीनां चतुर्णां व्यस्तप्रणवप्रतिपाद्यत्वमुक्तं तदवश्यं ज्ञातव्यमिति भावेन स्तूयते ।। **अमात्र इति** ।। "द्वैतस्योपशमश्शिवः" अमात्रस्तुरीयः अनंत-मात्रः अनंतांश ओंकारो मूलरूपी अनंतमात्र अनेकाशो विश्वादिः ओंकारश्च येन विदितः स एव मुनिर्नेतरो जन इत्यर्थः । अनंतशब्दस्या-नेकपरत्वं च "विशेषास्तेप्यनंताश्च परस्परविशेषिणः । स्वनिर्वाहकता युक्ताः सन्ति वस्तुस्वशषतः" इत्यनुव्याख्यानप्रयोगादवगम्यते। तदुक्तं सुधायां "अनन्तशब्दो यावंतो विशेषास्तावतामुपलक्षकः। ईश्वराख्ये द्रव्ये विशेषाणा-मनंतत्वं अन्यत्र अनेकत्वमिति द्रष्टव्यं"इति । अथवा मूलरूपिणोऽन्त-र्यामिणश्च समस्तप्रणवप्रतिपाद्यत्वं विश्वादिनां नादान्ततदंशाभिधेयत्वमुक्तं । न केवलमेतावत् किंत्वनंतानामपि रूपाणां प्रणवानन्तमात्राप्रतिपाद्यत्वं मंतव्यं । विशिष्टप्रणवार्थतयानन्तरूपोपासने चतुर्मुख एव अधिकारी नेतर इत्यवधरणापूर्वं उपसंह्रीयते।। **अमात्र इति** ।। अमात्रोऽन्यत्र संश्लेषविशेष-रहितो मूलरूपी । यद्वा मात्राभेदमंतरेण समस्तप्रणवप्रतिपाद्यः भिन्नांश रहितो वाऽनन्तमात्रः विशेषशक्त्याऽनंतांशोपेतो मूलरूप्यंतर्यामीच अनंता अनेका मात्रा नादांता वाचका यस्यस विश्वादिस्तुरीयांतोऽनंतमात्रः। यद्वा अनंता अपरिच्छिन्नाः प्रणवांशाः वाचका यस्य रूपसमुदायस्य सोऽनं-तमात्रः । द्वैतस्योपशमः शिव ओंकारः समग्रेणोमित्यनेनाक्रिमाणो विष्णुर्येन विदितः सब्रह्मैव मुनिर्मुख्यतो ज्ञानी नेतरो जनः । समग्रोपनिषदुक्तार्थाव-

धारणाय द्विरुक्तिः । उपसंहारे पुनर्द्वैतस्योपशमश्शिव इत्युक्तिस्तु सर्वाधिकारिसाधारण्येन ब्रह्मज्ञानस्य देहादौ मिथ्याभिमानलक्षणान्यथाज्ञानहानेन बंधान्मुक्तिः मुक्तौ दुःखासामानाधिकरणपरमानंदानुभवश्च फलमत उपास्येऽपि मिथ्याज्ञाननाशकत्वं निर्दुःखसुखरूपत्वं च सर्वैरुपास्यमिति भावेनेति बोध्यं । ओंकारस्यानंतमात्रवत्वे "त्रिमात्रमादितः कृत्वायावच्चानंतमात्रकं । प्रणवास्ते विभेदेन ह्यनंताः परिकीर्तिताः । एकमात्रेतरास्सर्वे वासुदेवाभिधायकाः । तेषां व्याख्यानरूपा हि सर्ववेदाः प्रकीर्तिताः । ओंकारेणांचितास्तस्मात्सर्वोच्चार्था हरेः प्रियै" रित्येकादशस्कंधतात्पर्योदाहृतं प्रमाणमनुसंधेयं । मध्वविजये च। "अनंत मात्रांतमुदाहरंति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः । तदाभवद्भाविचतुर्मुखाकृतिर्जपाधिकारो यतिरस्य सूचित" इति ।

समापितभाष्यो भगवानानंदतीर्थमुनिः ग्रंथोक्तगुणानां बुध्यारोहाय उक्तगुणविशिष्टं भगवंतं प्रणमन्मंगलमाचरति ।। **एकोऽपीति** ।। एकः अभिन्नोऽपि एकत्वसंख्याविशिष्टोऽपि निर्विशेष इद्रार्जुनादिवद्विशेषरहितोऽपि विश्वादिरूपेण चतुर्धा सन् जाग्रदादिरूपेण चतुर्धा व्यवहारभाक् । करोति नकरोतीति च व्यवहारे भाक् । तं चिदानंदं सच्चिदानंदस्वरूपं विश्वादिरूपिणं विष्णुं वंद इत्यशेषमतिमंगलं ।

**श्रीमन्मंडूकभाष्यार्थरत्नावलिरियं कृता ।**
**श्रीमत्तीर्थार्यशिष्येण श्रीनिवासेन निर्मला ।।**

**श्रीमध्वहृत्पंकजकर्णिकास्ते कृष्णे रमालालितपादपद्मे ।**
**स्वानंदसांद्रे रचितां मयेमां रत्नावलीं मे गुरवोऽर्पयंतु ।।**

**इति श्रीमद्विठलाचार्यतनूजेन श्रीमत्तीर्थार्यचरणसेविना श्रीनिवासेन कृता मांडूकभाष्यार्थत्नावलिः संपूर्णा ।।**

**।। श्रीवासवीनंदनात्मकनवनीतकृष्णः प्रीयतां ।।**

## पदार्थदीपिका

प्रणवोहीत्यत्र ब्रह्मशब्दार्थमाह ।। **सएवेति** ।। चतूरूप एवेत्यर्थः ।

ओंकारं मत्वा ओंकारो विदित इत्यत्रोंकारशब्दार्थमाह ।। **ओमितीति** ।। आप्त्यादिमत्त्वनिमित्तैः प्रणवांशाकारादिवाच्यत्वं विश्वादीनां प्रतिपादितं तच्छ्रुत्युक्तत्वान्नानादरणीयमित्याह ।। **आदिमत्वादयइति** ।। ओमित्यस्य तदवयवभूताकारादेरादिमत्त्वादयो येऽर्था उक्ताः ते श्रुतावपि श्रुता उक्ता इत्यर्थः ।

अपूर्वादिशब्दचतुष्टयस्यार्थमाह ।। **अपूर्वइत्यादिना** ।। नाशाभावादिति । तथाच नविद्यतेऽतरो नाशो यस्येत्यनंतर इत्यर्थ उक्तोभवति ।।**पराधीनेति** ।। तथाच नविद्यतेऽपरः स्थितिकर्ताऽस्येत्यनपर इत्यर्थो द्रष्टव्यः ।। **सर्वगत्वादिति** ।। नविद्यतेन्यो जगतो बहिर्यस्मादसावबाह्यः । तत्र हेतुः सर्वगतत्वादिति । अनेन सर्वव्यापिनमिति वक्ष्यमाणं सर्वगतत्वमत्र हेतुतया संबध्यत इत्युक्तं भवतीति द्रष्टव्यं ।

एवंहि प्रणवं ज्ञात्वेत्यादेरर्थः तं ज्ञात्वेति ।। विप्रमुच्यते विशेषेण मुच्यत इत्यर्थः । प्रणवोऽह्यपरमित्यादौ वासुदेवाद्यवतारविश्वाद्यवताराणां सामर्थ्यभेदतः परत्वापरत्वे इति प्रतीतिनिवारणायाह ।। **परत्वमिति** ।। तर्हि परत्वादिशब्दार्थः कः प्रतिपत्तव्य इत्यत आह ।। **अवतारस्येति** ।। पश्चिमत्वाच्चेत्यपि ग्राह्यं । पूर्वापरयोर्भावः पौर्वापर्यं । पूर्वत्वमपरत्वं चेत्यर्थः । पूर्वत्वं नाम परत्वमित्यवगंतव्यं । एवमन्यथाप्रतीतिं प्रमाणेनैव परिहृत्यार्थमाह ।। **पूर्वावतारइति** ।। वासुदेवाद्यवतार इत्यर्थः । **पश्चिमावतारइति** विश्वतैजसादिरूपावतारइत्यर्थः ।

**ततश्चायं खंडार्थः** - तं यथायथोपासते तदेव भवतीति वचनेन विश्वाद्युपासके तत्साम्यस्येव तुरीयोपासकेपि तत्साम्यस्यावश्यं वक्तव्यत्वादव्यवहार्यत्वादिधर्मेण तत्साम्यं विवक्षितमित्याशयेन नांतःप्रज्ञमित्यादौ तुरीयस्य यदव्यवहार्यत्वादिकमुक्तं तदनुवदन् प्रणवांशनादप्रतिपाद्यत्वरूपमहिमानमाह ।। **अमात्रइत्यादिना** ।। अव्यवहार्यत्वादिकं प्राग्व्याख्यातं तथाच योऽव्यवहार्यः प्रपंचोपशमः शिवोद्वैत अमात्रश्चतुर्थस्तुरीयः स ओंकारस्तदवयवभूत-

